ॐ

# विद्याविनिर्णयः

श्रीमदानन्दतीर्थसत्तीर्थोन्नाहिनी सभा
श्री आर्य अक्षोभ्यतीर्थमूलसंस्थान, वाळगारु.

पंडितरत्नम्

दो. वासुदेवाचार्यः

[मूल्यम् १-०-०

## श्रीआर्य अक्षोभ्यतीर्थ मूलसंस्थान, बाळगारु



श्रीरघुमान्यतीर्थ श्रीपादंगळवरु

श्रीरामनरसिंहश्रीः

नरसिंहोऽखिलाज्ञानमतध्वांतदिवाकरः ।
जयत्यमित सत्ज्ञान सुखशक्तिपयोनिधिः ॥

"अंते सिद्धस्तु सिद्धांतः मध्वस्यागम एव हि ।" एंदु भावि समीर श्रीमद्वादिराज श्रीमच्चरणर वाक्यानुसार मध्वसिद्धांतवु सर्वश्रेष्ठवादुदु. ई सिद्धांततत्वज्ञानदिंदले भक्तजनरिगे ऐहिकामुष्मिक श्रेयस्सु लभिसुवुदु. आदरू प्रचारकर बुद्धिदोषदिंद तत्वविषयदल्लि यथार्थज्ञानवागदे विपरीतज्ञान उंटागुत्तलिदे. इत्तीचेगे कोयमत्तूरिन श्री. डि. वि. सुब्बाचार्यरु प्रकटिसिरुव "श्रीब्रह्ममीमांसा शास्त्रमहिमा, विद्याविवेचन विचारश्च" एंब ग्रंथवु अंतहुदागिदे. आ ग्रंथवु जनतेयल्लि प्रसरिसि तप्प कार्यवन्नु प्रारंभिसुवुदरोळगागिये अदर खंडनेयु आवश्यकवेंदु तिळिदु मैसूरु श्रीमन्हाराजास्थानदिंद 'पंडितरत्नं' मोदलाद प्रशस्ति पडेदिरतक्क महाविद्वान् श्रीदोड्डबळ्ळापुरद वासुदेवाचार्यरिंद मूलटीकाटिप्पण्यादिगळ आधारदिंद विमर्शात्मकवागि 'विद्याविनिर्णय' एंब ग्रंथवु रचितवागिरुवुदु संतोषकर. ई ग्रंथवु श्रीमदाचार्यर सिद्धांतद यथार्थज्ञानवन्नुंटुमाडि, अपप्रचारदिंद प्रसक्तवागिरुव विपरीतज्ञानवन्नु होगलाडिसुत्तदेंब विषयदल्लि संदेहवे इल्ल. इंतह ग्रंथद प्रचारवु आवश्यकवेंदरितु नम्म श्रीमदानंदतीर्थसत्तीर्थोत्साहिनी सभेयिंद इदन्नु प्रकटिसिरुत्तेवे. ई ग्रंथवु पारमार्थिक विद्वज्जनरिगे अत्यादरणीयवू, तत्वजिज्ञासुगळिगे समीचीनज्ञानसाधकवू आगिदे. इंतह ग्रंथकर्तृगळिगे नम्म उपास्य श्रीरामनरसिंहदेवरु ज्ञानभक्ति वैराग्यादिगळन्नु इतोप्यतिशयवागि अनुग्रहिसलेंदु प्रार्थिसुत्तेवे.

दुर्मुखि सं॥ वैशाख } (Sd) श्रीरघुमान्यतीर्थ श्रीपादंगळवरु.
मैसूरु.

श्री आर्य अक्षोभ्यतीर्थ मूलसंस्थान, बाळगारु

# उदाहृत प्रमाणग्रंथाः

१. आथर्वणोपनिषत्
२. आथर्वणोपनिषद्भाष्य
३. " व्यासतीर्थीय
४. " उम्मर्जीय
५. " खंडार्थ
६. ब्रह्मसूत्र
७. ब्र. सू. भाष्य
८. तत्वप्रकाशिका
९. त. प्र. भावदीप
१०. तात्पर्यचंद्रिका
११. तात्पर्यचंद्रिकाप्रकाश
१२. अनुव्याख्यान
१३. न्यायसुधा
१४. न्या. सु. परिमळ
१५. वाक्यार्थचंद्रिका
१६. सुधायादुपत्य
१७. " श्रीनिवासतीर्थीय
१८. " कं. रामचंद्रतीर्थीय
१९. " काशीटिप्पणी
२०. " गुर्वर्थदीपिका
२१. त.प्र. गुर्वर्थदीपिका
२२. तत्वप्रदीप
२३. सत्तर्कदीपावली
२४. न्यायामृत.
२५. गीतातात्पर्य निर्णय
२६. न्यायदीपिका
२७. न्यायदीपिकाटिप्पणी
२८. गीताभाष्य
२९. प्रमेयदीपिका
३०. " श्रीनिवासतीर्थीय
३१. " उम्मर्जीय
३२. " भावरत्नकोश
३३. अभिनवचंद्रिका
३४. अद्वैतकालानल
३५. प्रमाणपद्धति
३६. भाष्यदीपिका
३७. महाभारततात्पर्यनिर्णय
३८. म. ता. नि. जनार्दनभट्टीय
३९. युक्तिमल्लिका
४०. ब्रह्मसूत्रसिद्धांतमुक्तावली
४१. श्रुतिसिद्धांतसंग्रह
४२. स्कांदपुराण
४३. त प्र. शर्कराश्रीनिवासती.
४४. गीताभाष्यविरोध परिहार
४५ पूर्वमीमांसा
४६. वाक्यार्थरत्नमाला
(वाक्यार्थ चं. टिप्पणी)

—0—

# विज्ञापनम्

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परं ॥

विद्याविवेचन एंब ग्रंथवन्नु गतवर्ष नावु प्रकटिसिद्धुदु सरियष्टे. कोयमत्तूरिनल्लि चार्टर्ड अकौंटेन्ट् D. V. सुब्बाचार्यरु अदन्नु खंडिसि, 'ब्रह्ममीमांसाशास्त्रमहिमा मत्तु विद्याविवेचनविचार', एंब ग्रंथवन्नु प्रकटिसि अदन्नु ननगे कळुहिसिद्दारे. अदन्नु संतोषदिंद नोडिदेनु. अदर पीठिकेयल्लि "But no agreement was reached" परंतु 'नास्माकं तादृशं निपुणतरमुपपादकं मनोगतं" एंबुदन्नु नोडि विस्मयवायितु. श्रीबाळगार आर्य अक्षोभ्यतीर्थ संस्थानाधीश्वररु कोयमत्तूरिनल्लि सभे माडिदाग सुब्बाचार्यरु परविद्याविषयवन्नु विचारमाडतोडगिदरु. अल्लि परडावर्ति श्रीगळवरु सभेयन्नु नडेयिसिदरु. मोदलनेय सभेयल्लि श्रीगळवरु पंडितरु सभ्यमहाशयरु सुब्बाचार्यर गुरुगळाद श्रीवादिराजाचार्यरु इवरुगळ समक्षदल्लि बहु होत्तु विचार नडेदु न्यायसुधेय परविद्या निरूपणभागवन्नु कूलंकषवागि परिशीलिसि वेदवे मुख्य पर विद्येयु. अदर निजार्थवन्नु तिळियलु सहकारियागिरुव ब्रह्मसूत्रवु गौणवागि परविद्येयेंदु व्यवहरिसल्पट्टिदे एंदु निरूपिसिदेनु. नेरेद सभेयल्लिये सुब्बाचार्यरु ओप्पिकोंडरु. एरडनेय सभेय होत्तिगे अवरु केलवु श्लोकगळन्नु मुद्रिसि सुमारु 10-12 पुटगळष्टु केलवु विषयगळन्नु बरेदु मुंदिरिसि, ब्रह्मसूत्रवे मुख्यपरविद्येयु, वेदादि सकल शास्त्रगळिगिंतलू उत्तम, वेदवु अदक्किंतलू न्यूनवादुदेंदु, वाक्यार्थचन्द्रिकादिगळल्लि केलवु वाक्यगळु तम्म वादक्के साधकवेंदलू हेळिदरु. अल्लि नेरेदिद्द पंडितरु मत्तु सभ्यरु इदिरिनल्लिये

अवरु उदाहरिसिद वाक्यगळिगे सरियाद अर्थवन्नु विवरिसि एल्लवू वेदवु मुख्य परविद्ये; सर्वोत्तमशास्त्रवु एंबुदक्के साधकवेंदु नानु निरूपिसिदेनु. आग तम्म संगड करेतंदिद्द अवर मगनन्नु. संबोधिसि. "शीनु ! नम्म संशयगळेल्ला होयितष्टे ? इन्नेनादरू केळ बेकादुदिदेये?एंदु केळिदरु. कूडले कुमारनु एल्लवू सरिहोयितु एंदनु. तक्षण सुब्बाचार्यरु कृतज्ञतेयन्नु सूचिसि तत्वनिर्णयवायितेंदरु आग निजवागियू तत्वजिज्ञासेयिंदले अवरु ई विचारमाडिदरेंदु भाविसि सौहार्ददिंद विमर्शपूर्वकवागि मन नाटुवंते विषयगळन्नु निरूपिसि; वेदक्किंतलू ब्रह्मसूत्रवे उत्तम, अदे परविद्ये एंबुदु सरियल्लवेंदु सप्रमाणवागि विवरिसिदेनु. प्रतिस्पर्धिगळेंदु नानु भाविसलिल्ल. जिज्ञासुलौकिकरन्नु प्रतिस्पर्धिगळेंदु नानु तिळियुवुदु सरियू अल्ल. इदे हिंदे नडेद वास्तविकांशवु. आदाग्यू अवरु अल्लि, नानु हेळिदुदन्नु ओप्पि, बळिक विमनस्करागि तावु हेळिदुदन्नू मरेमाचि,खंडनग्रन्थवन्नु प्रकटिसि ननगे कळुहिसिदरु. अवरु निज-वागियू तत्वजिज्ञासुवागिद्दल्लि तमगे तोरिद आशंकेगळन्नु नन्नल्लि अथवा सिद्धांताभिज्ञराद पंडितरल्लि साक्षात्तागि इल्लवे पत्रमूलक वागि निवेदिसि निर्णयमाडिकोळ्ळबहुदागिद्दितु. ई रीति तनगे तो रिदंते खंडने माडि अदक्के अनुमोदकरन्नू कल्पिसिकोंडु ग्रंथवन्नु प्रकटिसबेकागिरलिल्ल. हेगादरू ग्रंथकर्तृवेंब प्रसिद्धियन्नु संपादिस बेकेन्नुव रीतियन्नु अनुसरिसिदंते काणुत्तदे. इवर लेखनदल्लि तोरिसिरुव विनयवू 'कोंकळल्लि दोण्णे, कैयल्लि शरणार्ति' एंब न्यायवन्नु ज्ञापिसुत्तदे.

इंतह अव्युत्पन्न वादगळिगे शास्त्रज्ञरु उत्तर कोडुवुदुचितवल्ल. आदरे ग्रंथरूपवागि प्रकटिसिरुवुदरिंद सामान्य जनरिगे अन्यथा ज्ञानवागि श्रीमदाचार्यर सिद्धांतदल्लि अनादरणे माडुव प्रसंग बंदीतु. अंतह प्रसंगक्के अवकाशवागबारदु. श्रीमदाचार्यर सिद्धांतद

महत्ववु जनतेगे स्पष्टपडबेकु. एंब भावनेयिंद ई ग्रंथवन्नु रचिसि अपसिद्धांतवु खंडिसल्पट्टिदे. मुंदादरू प्रतिलेखकरु अपसिद्धांत प्रचारवन्नु बिट्टु इंतह खंडनेगळिगे अवकाशवन्नु कल्पिसदिरलेंदु आशिसुत्तेने.

अदेल्लवू हेगादरू इरलि गतविषयदल्लि ईग विवाद माडुवुदुचितवल्ल. प्रकृत विषयवन्नु प्रस्तापिसुत्तेने.

ब्रह्मसूत्रवे आथर्वणोक्त मुख्यपरविद्येयु, अदे सर्वोत्तम शास्त्रवु. एरडनेयदु महाभारतवु. इवेरडक्किंतलू वेदवु न्यूनवादुदु. अदु अपर विद्ये एंबुदे मुख्याचार्यर वादवु. अदक्के अनुव्याख्यान सुधा, वाक्यार्थ-चन्द्रिका, गुर्वर्थदीपिका, छांदोग्यभाष्य, वेदेशीय टिप्पणि, गीता भाष्य, इवुगळल्लिन केलवु वाक्यगळन्नु साधकवेंदु उदाहरिसिरुवरु. ई वाक्यगळिगेल्ला शास्त्रमर्यादेयिंद अर्थवन्नु परिशीलिसिदरे ओंदु वाक्यवू अवर पक्षक्के साधकवागुवुदिल्ल. बाधकवू अहुदेंबुदन्नु ई ग्रंथदल्लि साधकबाधक विमर्शेयिंद सप्रमाणवागि निर्णयिसलागिदे. पुनरुक्तियागबारदेंदु इल्लियू विवरिसुवुदिल्ल.

अपौरुषेय वेदवे सर्वोत्तम शास्त्र, मत्तु आथर्वणोक्तमुख्य पर विद्येयु,पौरुषेय शास्त्रवु निर्णायक निर्णयवेंबुदागि एरडु विध. निर्णायक शास्त्रगळल्लि ब्रह्ममीमांसाशास्त्रवु उत्तम. निर्णयगळल्लि भारतवु उत्तमवेंबुदे श्रीमदाचार्यर सिद्धांत तत्व. अदन्ने मूल, टीका, टिप्पण्यादि ४० ग्रंथगळिंद विचारपूर्वकवागि ई ग्रंथदल्लि सिद्धपडिसलागिदे. आ ग्रंथगळ हेसरन्नु मुंदे कोट्टिदे.

अवरे उदहरिसिरुव अनुव्याख्यानादिगळल्लि पौरुषेयवाद ब्रह्मसूत्र-महाभारतगळु वेदसंवादियागिरुवुदरिंद प्रमाणवेनिसुवुदेंदु हेळिदे. एंदरे पौरुषेय ग्रंथवु वेदसंवादियादरे प्रमाणवु वेदविरुद्धवादुदु अप्रमाण एंदु तात्पर्य. हीगे यावुदर विरोधदिंद पौरुषेयवु प्रमाणवागलारदो, यावुदर संवाददिंद प्रमाणवागुवुदो अंतह वेदवु

पौरुषेयग्रंथकिंतलू न्यूनवेन्नबहुदे ? वेदसंवाददिंद पौरुषेयप्रामाण्य वन्नु समर्थिसुव अनुव्याख्यानादिगळिगे वेदवु अपरविद्ये, हागू पौरु षेयकिंत न्यून एंदु तात्पर्यवु सर्वथा संभविसुवुदिल्ल.

सिद्धांतकाररु प्रमाण मत्तु अदर दर्जेयन्नु मोदलु निर्णयिसि सिद्धवाद उत्तम प्रमाणद आधारदमेले सिद्धांतवन्नु स्थापिसुवुदे संप्रदाय. प्रतिलेखकरु हेळुवंते. ब्रह्मसूत्रादिपौरुषेयग्रंथगळे सर्वोत्तम प्रमाण वेंबुदु श्रीमदाचार्यरिगे सम्मतवागिद्दरे अवर सिद्धांतवू पौरु षेयग्रंथगळ आधारदमेलेये नेलेसुवुदु. एंदरे मध्व सिद्धांतवु वैदिकव ल्लवेंदु हेळिदंतागि अवहेळनक्के गुरियागुवुदु. वेदद सकल भागवन्नू परमप्रमाणवेंदु घोषिसि अदर आधारदिंद परम वैदिक सिद्धांत स्थापकराद श्रीमदाचार्यरन्नु अवैदिक सिद्धांतकर्तरेन्नुवुदरिंद श्रीम-दाचार्यरिगे द्रोहवेसगिदंतेये सरि.

आथर्वणोपनिषत्तिन "द्वे विद्ये वेदितव्ये परा चैवापरा च" एंब वाक्योक्त विद्याद्वयवावुदेंबुदे ईग विचार्यवु. अल्लि परविद्येयन्नु हेसरेत्ति हेळदे अदर लक्षणवन्नु हेळि समन्वयपूर्वकवागि कर्मब्रह्म विषयकवाद मंत्रगळे परविद्येयेन्दु निरूपिसिदे.

"आथर्वणानेव मंत्रान् परविद्यात्वेनाह."

एंब अदर भाष्यवु टीकाटिप्पणिगळू हागेये निरूपिसिवे.

'यया तदक्षरमधिगम्यते' एंबुदे लक्षणोक्तियु. अक्षरनामकविष्णु वन्नु बोधिसुवुदे परविद्येयु एंदु अदर अर्थ. अदरिंद विष्णु बोधक-त्ववु परविद्यालक्षणवेंदु हेळिदे.

ई लक्षणवु वेदब्रह्मसूत्रगळल्लि यावुदक्के सल्लुत्तदे ? एंबुदन्नु विचारिसोण :—"तदर्थ निर्णयाय ब्रह्मसूत्राणि चकार, पुनस्तस्यार्थ वित्तये चकार ब्रह्मसूत्राणि" एंब सूत्रभाष्योक्तियंते वेदार्थवन्नु निर्णयि सुवुदक्कोस्करवे ब्रह्मसूत्रवु रचितवागिदे. अनंत वेदराशियल्लिन ओंदोंदु वाक्यवन्नू तेगेदुकोंडु इदु विष्णुबोधक, इदु विष्णुबोधक

एंत हेळतोडगिद्रे अदु मुगियुवुदे इल्ल. आदकारण श्रीवेदव्यासरु सूत्रदिंद न्यायवन्नु हेळि अदर बलदिंद वाक्यार्थनिर्णयिसुव प्रकार वन्नु तोरिसि, उदाहरणेगागि केलवु वाक्यगळ अर्थनिर्णयवन्नु तोरिसिद्दारे. हागेये सूत्रोक्त ओंदोंदु न्यायदिंद बहुशास्त्रार्थगळु निर्णयिसल्पडबहुदु. एंदरे वेदवे साक्षात्तागि विष्णुबोधकवादरू अदन्नु एल्लरू तिळियलाररु. अंतहवरिगे वेददिंद विष्णुबोधवागलु सूत्रोक्तन्यायवु सहकारियागुवुदु. सूत्रवु साक्षात्तागि न्यायवन्ने बोधिसुत्तदेयादरू, आ न्यायवु वेददिंदागुव विष्णुज्ञानक्के सहायकवागिरुव कारण औपचारिकवागि परंपरेयिंद सूत्रवू विष्णुबोधकवेन्नबहुदेंदु न्यायसुधेयल्लि (p. 15) स्पष्टनिरूपणविदे.

हीगे उपनिषदुक्त परविद्या लक्षणवाद विष्णुबोधकत्ववु वेदद सहज धर्मवादुदरिंद अदे उपनिषदुक्त 'परविद्येयेंबल्लि संशयविल्ल. वेददिंदागुव विष्णुबोधसहकारियागिरुव सूत्रवन्नू ई अर्थदल्लि परविद्येयेंदु व्यवहरिसलु अड्डियिल्ल. अंतहुदन्नु अमुख्यवेंदु हेळुवरु. आदुदरिंद ब्रह्मसूत्रवन्नु उपनिषदुक्त लक्षणदिंद मुख्यपरविद्येयन्न लागुवुदिल्ल.

उपनिषद्भाष्य, टीका, टिप्पणि, ई विषयवन्नु प्रतिपादिसिरुव इतर सिद्धांत ग्रंथगळेल्लवू ऐककंठ्यदिंद ऋगादिवेदवे विभिन्नविवक्षेयिंद परापरविद्येयेनिसुवुदु ; ग्रंथभेदविल्लवेंदु स्पष्टवागि घोषिसिवे. अवेल्लवन्नू ई ग्रंथदल्लि उदाहरिसि विमर्शिसलागिदे. हीगे स्पष्टोक्तियिद्दरू, ब्रह्मसूत्रवे परविद्या, अदे वेदक्किंतलू उत्तमवेंब वादवु अपसिद्धांत प्रचारवेंदु बेरे हेळबेकागिल्ल.

ब्रह्मसूत्र १, २, ६, 'अदृश्यत्वादिगुणको धर्मोक्तेः' एंब सूत्रदल्लिन धर्मपदक्के भाष्यदल्लि परविद्याविषयत्ववेंब धर्म एंदर्थमाडि 'यत्तदद्रेश्यं" इत्यादि वेदविषयत्ववन्नु निरूपिसिद्दारे. अदरिंद वेदवे परविद्येयेंदु

सूत्रभाष्यकारर आशयवु व्यक्तवागुवुदु. प्रतिलेखकर हेळिकेयंते सूत्रवे परविद्येयादल्लि सूत्रविषयत्ववे सूत्रोक्तधर्मवेंदंतागुवुदु. यावुदे ग्रंथदिंद अर्थविशेषवन्नु साधिसुवाग तनगिंतलू उत्तमवाद ग्रंथांतरोक्तियन्नु प्रमाणवेंदु हेळुवुदे सरियाद मार्गवु. तनगे ताने प्रमाणवेंदु हेळबारदु. हागादरे नानु हेळुत्तेने ओप्पलेबेकु एंदु निर्बंधिसिदंतागुवुदिल्लवे ? अंतह साधने माडुवुदक्किंत प्रतिज्ञामात्रवे लेसु. प्रतिज्ञामात्रदिंद इष्टसिद्धियागुवुदिल्लवेंबुदु स्पष्ट. आदुदरिंद सूत्रवे परविद्ये, सर्वोत्तमशास्त्रवेंबुदु सूत्रकाररिगे सम्मतवल्लवेंदु स्पष्टपडुत्तदे.

ब्रह्मसूत्र १, १, ३, शास्त्रयोनित्वात् एंब सूत्रभाष्यदल्लि श्रीसर्घरु. "ऋग्यजुःसामाथर्वाश्च भारतं पंचरात्रकं। मूलरामायणं चैव शास्त्रमित्यभिधीयते। यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितं। अतोन्यो ग्रंथविस्तारो नैव शास्त्रं कुवर्त्म तदिति स्कांदे॥" इत्यादि प्रमाण वचनदिंद शास्त्रगळन्नु परिगणिसिरुवरु. अदरल्लि ब्रह्मसूत्रवु सेरिल्ल. ऋगादिगळंते ब्रह्मसूत्रवू प्रधानशास्त्रवागिद्दल्लि अदन्नू हेळबेकागित्तु. हेळिल्लवाद्दकारण ब्रह्मसूत्रवु वेदक्के अर्थनिर्णयमाडिकोडुव अंग शास्त्रवे होरतु वेददंते पृथक्काद प्रधानशास्त्रवल्लवेंब आशयवु व्यक्तवागुत्तदे. सुधेयल्लियू 'वेदादीतिकर्तव्यतारूपस्यास्य पृथक्प्रामाण्यानभ्युपगमात्' एंब वाक्यदिंद ई अभिप्रायवु सिद्धवागिदे. हीगे स्वतंत्र शास्त्रगळ पंक्तिगे सेरलर्हवल्लद वेदेतिकर्तव्यतारूपवाद अंगशास्त्रवन्नु वेदक्किंतलू उत्तमशास्त्रवेन्नुवुदु हास्यास्पद. एंदिगू सर्वज्ञरिगे अभिमतवागलारदु.

परापरविद्येय प्रस्तापमाडिरुव उपनिषत्तु स्वतः लक्षणसमन्वयपूर्वकवागि वेदवे परापरविद्येयेंदु हेळिदे. भाष्यकाररु ओंदे वेदवन्नु परापरविद्येयेन्नुवुदु हेगे? विरुद्धवल्लवे? एंब प्रश्नेगे? विवक्षाभेद

दिंद एंदरे ब्रह्मसूत्रोक्त न्यायदिंद परिशीलिसिदरे वेदवेल्लवू विष्णु वन्ने बोधिसुवुदु. आग अदु परविद्येयेनिसुवुदु. स्वतंत्रवागि लोकन्यायदिंद परिशीलिसिदरे कर्मदेवतादि बोधकवागुवुदु आग अदे वेदवु अपरविद्येयेनिसुवुदु. एंबुदागि समाधान हेळि, ओंदे वेदवु विवक्षाभेददिंद परापरविद्येयागुवुदेंदु स्पष्टपडिसिद्दारे. टीका, टिप्पणिकाररेल्लरू ऐककंठ्यदिंद वेदवे परापरविद्येयु, ग्रंथभेद विल्लवेंदु मुक्तकंठदिंद घोषिसिरुवाग वेदभिन्नवाद ब्रह्मसूत्रवु पर विद्ये मुंताद वादक्के ओंदादरू निरवकाशप्रमाणवु हेगे दोरकीतु ?

अनुव्याख्यानदल्लि "परविद्याख्यं चक्रे शास्त्रमनुत्तमं, परमाख्य विद्या" एंब वाक्यदिंद ब्रह्मसूत्रवन्नु श्रीसर्वज्ञरु परविद्येयेंदु हेळिरुवु देनो निज, आदरे आ वाक्यक्के अल्लिन संदर्भ आथर्वणोपनिषत्तु, अदर भाष्यादि इतर ग्रंथदल्लिन आचार्यर निरूपणे, टीका, टिप्पणि, इत्यादिगळन्नु पर्यालोचिसि मेले हेळिदंते परविद्येयाद वेदद विष्णु बोधकत्ववन्नु तोरिसिकोडुवकारण, सूत्रवन्नू अमुख्य परविद्येयेंदु व्यवहरिसबहुदेंबुदे निजवाद आशयवेंदु न्यायसुधादिगळल्लि निरूपि सिरुवुदन्नु तिळियबेकु.

ई ग्रंथदल्लि—प्रकृतविषयक्के संबधिसिद ४० सिद्धांत ग्रंथगळ वाक्यगळन्नु उदाहरिसि, विचारपूर्वकवागि वेदवे मुख्य परविद्येयु, सर्वशास्त्रोत्तम,पौरुषेय निर्णायक ग्रंथगळल्लि ब्रह्मसूत्रवू, अंतह निर्णय ग्रंथगळल्लि महाभारतवू उत्तमवेंब सिद्धांतवन्नु सपरिकरवागि निर्णयिसलागिदे. ननगे आग्रहविल्ल. वैष्णवरेल्लरू बांधवरेन्दु नन्न भावने. श्रीसुब्बाचार्यादिगळल्लि ननगे वैमनस्यविल्ल. अपसिद्धांत वन्नु मात्र नानु यावागलू द्वेषिसुवेनु. अंतह प्रचारवन्नु सहिसला रेनु. अदन्नु तुच्छीकरिसुवुदु, सत् सिद्धांतवन्नु गौरविसुवुदू

कर्तव्यवु. ईगलू नानु हेळिरुवुदु सिद्धांतवल्ल. प्रतिलेखकर हेळिकेये सिद्धांतवेंदु यारादरू पंडितरु सप्रमाणवागि शास्त्रमर्यादियन्ननुसरिसि विचारपूर्वकवागि निर्णयिसिकोट्टरे नानु अदन्ने संतोषदिंद कृतज्ञतापूर्वकवागि स्वीकरिसि, प्रचुरपडिसुवेनेन्दु मनःपूर्वकवागि बिन्नविसुवेनु.

संस्कृत भाषेयल्लि बरेदिद्द ई पीठिकेयन्नु नोडि केलवु दक्षिण देशद माध्वबांधवरु संस्कृतवन्नरियद माध्वजनतेगू ई विषयद परिचयवागुवंते माध्वर मनेभाषेयाद कन्नडदल्लि पीठिकेयन्नु प्रचुरपडिसुवुदु ओळ्ळेयदेंदु सूचिसिद्दरिंद कन्नड भाषेयल्लि इदन्नु प्रकटिसलागिदे.

सत्सिद्धांत प्रचार बद्धादररु, यत्याश्रमविहितवैराग्यतपःप्रवचनादि सद्गुणालंकृतरु आगिरुव श्री आर्य अक्षोभ्यतीर्थ संस्थानाधीश्वर(बाळगारु)श्री, श्री, रघुमान्यतीर्थ श्रीपादंगळवरु तम्म सभेयल्लि श्रीसुब्बाचार्यरिंद प्रारंभिसलपट्ट अन्यथा प्रकटितवाद अपसिद्धांत प्रचारवन्नु मनगंडु, अदक्के प्रतिग्रंथवन्नु रचिसलु ननगे अप्पणेयन्नित्तरु. श्रीगळवर आज्ञाप्रकार सिद्धांत ग्रंथगळ आधारदिंद ई ग्रंथवन्नु रचिसि श्रीगळवरिगे समर्पिसिदेनु. इंतह संदर्भगळल्लि असद्वादवन्नु खंडिसि सत्सिद्धांत प्रचारमाडुवुदु वेदांतसाम्राज्य पीठाधिपतिगळिगे मुख्य कर्तव्यवेंबुदन्नरितु श्री श्रीगळवरु ई ग्रंथवन्नु प्रकाशिसिरुवरु. ई रीति सिद्धांत मननादिगळिंद श्री सर्वज्ञसेवेगे अवकाशवन्नु कल्पिसिद श्री श्रीगळवर सन्निधानदल्लि कृतज्ञतापूर्वक साष्टांग नमस्कारगळन्नर्पिसुत्तेने.

ई ग्रंथवन्नु अंदवागि अच्चुमाडिकोट्ट परिमळ मुद्रणालयद मालीकरिगे नम्म धन्यवादगळु.

—पंडितरत्नं, दो. वासुदेवाचार्यः

श्रीः

# विद्याविनिर्णयः

श्री गुरुभ्यो नमः

यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम् ।
न क्षमन्ते विमतयस्तमुपासे श्रियः पतिम् ॥

—न्या· सु·

नमामि श्रीमदानन्दतीर्थार्यपदपङ्कजे ।
टीकार्य व्यासराजादिटिप्पण्याचार्यसन्ततिम् ॥
नत्वा मन्त्रालयाचार्यं तदुक्तीः परिभाव्य च ।
मद्गुरूंश्च यथाशक्ति कुर्वे विद्याविनिर्णयम् ॥

## आथर्वणे विद्याप्रकरणम् :—

"स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह । अथर्वणे यां प्रवदेत ब्रह्मा अथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्यां । स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावरां । शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणम् निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यंति धीराः" इति

ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः । ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ॥ इति परमसंहितायां ऋग्भिः

...... पुराणकैः ।............ वेदे रामायणे चैव पुराणे भारते तथा आदावंते च मध्ये च विष्णुः सर्वत्र गीयते ॥ ...... चतुर्दश महा विद्यास्थानानि वेदितव्यानि भवन्तीति च मूलश्रुतिः ॥ पञ्चरात्रं ऋगाद्याश्च सर्वमेकं पुराऽभवत् मूलवेद इति ह्याख्या काले कृतयुगे तदा ॥...... तस्मात्कार्ययुगे जनाः प्राप्नुवन्ति हरिं तं च तस्माद्वेदे न किंचन ॥ पारावर्य...... वेदैश्च पञ्चरात्रैश्च भक्त्या यज्ञैस्तथैव च दृश्योऽहं नान्यथा दृश्यो वर्षकोटि शतैरपि॥ इत्यादि वाराहे ॥ अत्रापि तदेतत्सत्यं मंत्रेषु कर्माणि कवयो यान्यपश्यन् इत्यादिना कर्मविषया मपरविद्यामुक्त्वा येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्म विद्यां इत्यारभ्य आथर्वणानेव मन्त्रान् परविद्यात्वेनाह । चतुर्वेद संस्कारवतामेव च विद्यायामधिकार उक्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णमिति ॥

—आथर्वणोपनिषद्भाष्यं खण्डः १.

प्रतितिष्ठत्यनयेति प्रतिष्ठा सर्वविद्यानां प्रतिष्ठा सर्वविद्या प्रतिष्ठा तां सर्वविद्याप्रतिष्ठापिकां। ब्रह्मविद्याज्ञाने सर्वविद्यानां सफलत्वादिति भावः। परावरामिति परा च सा अवरा च परावरा तामित्यर्थः। ऋगादिविद्यानामेव विवक्षाभेदेन परावरविद्यात्वं न तु परावरविद्ययोर्भेदोऽस्तीति दर्शयितुं परावरामिति कर्मधारय निर्देशः। अभेदे कर्मधारय इति प्रसिद्धेरिति बोध्यं ॥ परैव परम-मुख्यया वृत्त्या भगवत्प्रतिपादकत्वोपाधिना परैव सती विद्या अमुख्यवृत्त्या कर्मादिप्रतिपादकत्वेनापरा च भवति न वस्तुतो व्यक्ति भेदोऽस्तीति सूचयितुं चैव शब्दः तथाच अवस्थाभेदेनैव विद्या द्वैविध्यं न वस्तुत इति भावः ॥ यदा विष्णोर्न वाचका इति । त्रेतादि कालबलेन विष्णोरन्यत्रादरेण स्वकीय योग्यतावशेन च यदा ऋगाद्याः न विष्णोर्वाचकाः किं तु कर्मादिप्रतिपादकाः तदा ऋगाद्या अपरा

विद्याः। यदा तु ऋगाद्याः ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायोपकृताः संतो विष्णोर्वाचकाः तदा ता एव परमा विद्याः परविद्या इत्यर्थः। यदा विष्णोऽस्तु वाचका इति कालविशेषे ऋगादीनां विष्णुवाचकत्वमुक्तं। यदा शब्दप्रयोगात्। तत्प्रमाणेनैवोपपादयति। पंचरात्रमिति। ............ तदेत्यस्यैव विवरणं कृतयुग इति ............ ततश्च मूलवेदशब्दो मूलकारणमाचष्टे। मूलकारणं च विष्णुरेव। मुख्यामुख्ययोर्मुख्ये संप्रत्यय इति न्यायात्। अतो मूलवेद इति संज्ञाबलादृगादिकं सर्वमेकविषयमिति कल्प्यते॥ ............... अस्तु सर्वमेकविषयकं ततः किमित्यत आह। तस्मादिति। कृतयुगे सर्वस्यापि वेदस्य विष्ण्वेकविषयत्वात् किंचन व्यपदेशभेदप्रयुक्तं वा प्रतिपाद्यभेदप्रयुक्तं वा पूज्यभेदप्रयुक्तं वा पारावर्यं परापरविद्याभेदः वेदे नास्तीत्यर्थः तथापि यत्तत्भेदाद्वेदे पारावर्यं भविष्यतीत्यत आह। हरिरिति। यस्मादृगाद्या अनुव्याख्यान्ताः निश्श्वसितमेतदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणः श्लोकाः सूत्राण्यनुव्याख्यानानीति श्रुत्युक्तग्रन्थाः मुरगाननाद्धरेरुत्थिताः तस्माद्वेदे पारावर्यं नास्तीत्यन्वयः। ........ कार्तयुगो जनस्त्रिविधः उत्तममध्यमाधमभेदात् तत्रोत्तमः सर्वैर्यजेत्, मध्यमो ऋगाद्यैस्तं यजेत्, अधमस्तु पञ्चरात्रेणेत्येवं व्यवस्थितविकल्पसूचनार्थं अथवेत्युक्तं। ........... ननूक्तप्रमाणैः सर्ववेदानां विष्णुपरत्वमुपपाद्य परविद्यात्वं समर्थितं तदयुक्तं सर्ववेदवद्ग्रंथान्तरस्यापि विष्णुप्रतिपादकत्वे किं ऋगाद्याः परविद्याः? किं वा ग्रन्थान्तरमिति संदेहापातात्। यया तदक्षरमधिगम्यत इत्युक्ताक्षराधिगतिकरणत्वस्योभयत्र साम्यादित्यत आह। वेदैश्चेति। तथा चान्यस्य विष्णुप्रत्यायकत्वाभावाद्वेदादीनामेव विष्णुप्रत्यायकत्वेन परविद्यात्वनिर्णयोपपत्तिरिति भावः।.... ....नान्यथा दृश्य इति। वेदादिव्यतिरिक्तग्रन्थेन भक्त्याद्यन्यसाधनेन च ज्ञेयो नेत्यर्थः। स्यादेतत् यदि परापरविद्याविभागकर्तुरंगिरसो

मुनेः ऋगादीनामेव अवस्थाभेदेन परविद्यात्वमपरविद्यात्वं चेत्यत्र तात्पर्यं स्यात्, तदेव कुत इत्याशंकां परिहरन्नेव अपव्याख्यानद्वये दोषान्तरं सूचयति । अत्रापीति । यदि ऋगाद्या एव परविद्या अपरविद्याश्चेत्यत्र भगवतो मुनेस्तात्पर्यं न स्यात् तर्ह्युत्तरत्र कर्म विषयाणां ब्रह्मविषयाणां च मन्त्राणामुपन्यासोऽनुपपन्नः स्यात् । द्वे विद्ये वेदितव्ये इति ये द्वे विद्ये प्रतिज्ञाते तयोरेवाग्रे वक्तव्यत्वात् । नचैवं, अतः कर्मब्रह्मविषयाणां मंत्राणामेव परापर विद्यात्व सिद्धिः । ............अयं भावः अंगिरसा तावदुपसंहारे ऋगादीनां ब्रह्मविद्यायाश्चैकाधिकारिकत्वमुक्तं । तच्च ऋगादीमामेव ब्रह्मविद्यात्वरूप परविद्यात्वे संभवति; नान्यथा । विषयभेदे अधिकार्यैक्यायोगात् अतस्तदन्यथानुपपत्त्या ऋगादीनां परविद्यात्वे तात्पर्यमवगम्यत इति । ........... अग्राह्यं अनुमानपौरुषेयागमावेद्यं — इति ।

—आथर्वण — उमर्जीय टिप्पणिः

तत्रापरा ऋग्वेदो यजुर्वेद इत्युक्त्वा अथ परा यया तदक्षरमधिगम्यत इत्युक्तत्वात् ऋगादिव्यतिरिक्ता परविद्येति प्रतीयते । परैस्तथा व्याख्यातत्वाच्चातस्तां निवारयन्नाह । ऋगाद्या इति । आपाततः प्रतीतार्थतया यदा विष्णोर्न वाचकाः, परमयोगरूढ्या वाचकाः ऋगादयः साकल्येन भगवत्प्रतिपादकाः इत्युक्तं प्रमाणैर्द्रढयति । ऋग्भिरति.... तस्माद्वेदे प्रतिपाद्यभेदाभावात्परविद्या, अपरविद्येति पारावर्यं किंचन मास्ति । वक्तृभेदाभावाच्च पारावर्यं नास्तीत्याह । यस्मादिति..... ऋगादीनामेव परविद्यात्वे न प्रमन्दितव्यमिति भावेन तत्र मानान्तरं पठति वेदैरिति । ऐतदुपनिषदः पूर्वोत्तरपर्यालोचनया ऋगादेरेव विवक्षाभेदेन परविद्यात्वं समर्थयते । अत्रापीति । मन्त्रात्मिकामेव कर्म विषयामितिग्राह्यं । आथर्वणान्मन्त्रानेव । इतोऽपि ऋगादय एव विवक्षाभेदेन परविद्याः न केवलमुपनिषदित्याह । चतुर्वेदेति ।

—आथर्वण व्यासतीर्थीय टीका

ब्रह्मविद्यां विशिनष्टि। परावरामिति। परा च साऽवरा च तां परावरां। एकैव विद्या विवक्षाभेदेन पराऽवरा च भवति। सा च ऋगादिरूपेत्यग्रे व्यक्ता।............... विद्या=वित्तिजनकं शास्त्रं, द्वे=द्विविधमित्यर्थः। उपाधिद्वैविध्याभिप्रायेण द्विवचनोक्तिः। इति ब्रह्म विदो वदन्ति। स्मेहेति प्रसिद्धमित्यर्थः; तथा च सूत्रं 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यां' इति। परा चैवापरा चेति, परममुख्यार्थ बोधकत्वोपाधिना परैव सती विद्या अपरा अमुख्यार्थबोधकत्वोपाधिना अपरा चेत्युच्यते; न वस्तुतो व्यक्तिभेदोऽस्तीत्येवकारप्रयोगः। अपरविद्यैवोपाधिभेदेन परविद्येति भावेन प्रस्तावपूर्वमपरविद्यामाह। तत्रापरेति।...... एतदेव ऋगादिशास्त्रमक्षराधिगति हेतुत्वोपाधिना परविद्येति भावेनाह, अथ परेति। यदद्रेश्यत्वादिगुणकं तदक्षरं यया विद्यया वित्तिजनकऋगादिशास्त्रेणाधिगम्यते सा अक्षरज्ञप्ति-हेतुत्वोपाधिना परविद्येत्युच्यत इत्यर्थः। तदुक्तं; ऋगाद्या अपरा विद्या इत्यादि—तां ऋगादिशास्त्ररूपां ब्रह्मविद्यां तत्वतः याथातथ्येन प्रोवाचेति; कर्मदेवतादिबोधकतया शौनकेनावगतां ऋगादिविद्यां परममुख्यवृत्तिमहातात्पर्याभ्यां ब्रह्मज्ञप्तिहेतुत्वेन परविद्या यथा भवति तथा व्याचख्याविति भावः। अत एव तत्वत इत्युक्तिः।

—आथर्वण खण्डार्थः

चतुर्मुखः सर्वविद्याप्रतिष्ठापिकां ब्रह्मविद्यां ब्रह्मप्रमितिजनक शब्दराशिं वैवस्वतमन्वन्तरे प्रथमतो जाताय अथर्वणे प्राह। अथर्व मुनिस्तु विवक्षाभेदेन परापरव्यपदेश्यां तामेव ब्रह्मविद्यामंगिरमुनये, स च भारद्वाजाय, सोऽप्याङ्गिरसे उपदिदेश। तमेतमाङ्गिरसं यथा विध्युपसन्नश्शौनकः हे पूज्यपाद! सर्वमिदं कर्मदेवतादिकं मया ज्ञात मस्ति; तज्ज्ञानं कस्मिन्विज्ञाते सफलं भवति? यज्ज्ञानार्थं सन्मोक्षाख्य फलवद्भवति, तन्मे ब्रूहीति पप्रच्छ। अंगिरास्तु कर्मदेवतादिज्ञानं

तदनुष्ठानादिना ब्रह्मज्ञानार्थं सम्मोक्षाख्यफलवद्भवतीति 'तदेतत्सत्यं मंत्रेषु' इत्यादिना विवक्षुः ब्रह्मस्वरूपं वक्तुमुपोद्घाततया विद्यानिरूपणमुपक्रांतवान्। द्वे विद्ये इत्यादिना। परममुख्यार्थोपपादकत्वोपाधिना परेत्युच्यमानैव विद्या मुख्यार्थोपपादकत्वोपाधिना अपरा चेत्युच्यत इति तदर्थः। एवकारप्रयोगेण वस्तुतो व्यक्तिभेदो नास्तीति च स्पष्टं। विवृतं चेत्थमेव भाष्ये:- ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः। ता एव परमा विद्या यदा विष्णोस्तु वाचकाः॥ इति

'वेदे' इत्याद्युत्तरभाष्येण ऋगादीनां विष्णुवाचकत्वविवरणपरेण, उदाहृतं श्रीव्यासतीर्थीय टीका, उम्मर्जीय टिप्पणी, श्रीराघवेन्द्रतीर्थीय खण्डार्थेषु भाष्यस्थ 'वाचकपदस्य प्रतिपादक बोधक इत्यादिशब्दैर्विवरणेन च वाचकत्वं पदशक्तिरेवेति स्पष्टमेव भाष्यादिदर्शिनां।

'यदा विष्णोस्तु वाचकाः' इति भाष्यं च कृतयुगे मूलकारण विष्ण्वेकज्ञापकत्वनिमित्तेन मूलवेदसंज्ञकानां ऋगादीनां प्रतिपाद्य भेदादिप्रयुक्तं पारावर्य=परापरविद्याभेदः वेदे नास्तीति 'तस्माद्वेदे न किंचन पारावर्यं' इत्युत्तरभाष्येण व्याख्यातं। एवं च कार्तयुगा जनाः ऋगादिकं परविद्येत्येव जानन्ति। इतरयुगेषु च त्रेतादिकालबलेन विष्णोरन्यत्रादरेण स्वकीययोग्यतावशेन च यदा ऋगाद्या आपाततः प्रतीतार्थतया विष्णोर्न वाचकाः, किंतु कर्मादिप्रतिपादका इत्यनुसंधीयंते, तदा ऋगाद्या अपरविद्या, यदा तु ऋगाद्याः परमयोगरूढ्या विष्णुवाचकत्वेनानुसंहिताः, तदा ता एव परविद्या इति जानन्तीत्यर्थः। समर्थितश्चायमेवार्थः। प्रमाणोदाहरणपूर्वकं 'ऋग्भिः' इत्यादि भाष्येण। न केवलमुक्तबहिरंगसाधनैरेव ऋगादीनां विवक्षाभेदेन परापरविद्यात्वे, किंतु अन्तरंगसाधनमप्यमुमेवार्थं द्रढयतीत्याह। अत्रापीति। तथाहि :—यदि परापरविद्याविभागकर्तुरंगिरसो मुनेः ऋगाद्या एव

परविद्या, अपरविद्याश्चेत्यत्र तात्पर्यं न स्यात् तर्हुत्तरत्र कर्मविषयाणां ब्रह्मविषयाणां च मंत्राणामुपन्यासोऽनुपपन्नः स्यात्; द्वे विद्ये वेदितव्ये इति प्रतिज्ञातयोरेवाग्रे वक्तव्यत्वात्। 'किंतु 'तदेतत्सत्यं मंत्रेषु कर्माणि' इत्यादिना कर्मविषयामपरविद्यामुक्त्वा, येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्यां इत्यारभ्य आथर्वणानेव मंत्रान्पर विद्यात्वेनाह इति पूर्वोत्तरसंदर्भपर्यालोचनयाऽपि ऋगादीनामेव परापरविद्यात्वे सिध्यतः। किंच अंगिरसा तावदुपसंहारे ऋगादीनां ब्रह्मविद्यायाश्चैकाधिकारिकत्वोक्त्या ऋगादीनामेव ब्रह्मविद्यात्वरूप परविद्यात्वमभिप्रेतं। विद्याभेदे विषयभेदावश्यंभावेन अधिकार्यैक्यायोगात्। अतस्तदन्यथाऽनुपपत्त्यापि ऋगादीनामेव परविद्यात्वे तात्पर्यमवगम्यते। 'ता एव' इत्यत्रावधारणं चात्रार्थे विस्पष्टं गमकं॥

परया त्वक्षरप्राप्तिः ऋग्वेदादिमया परा।

—वनमालिकृतब्रह्मसूत्रसिद्धांत मुक्तावलिः

महातात्पर्यतो विष्णुर्यदा वेदेन बोध्यते।
तदा विद्या परा सा स्यादपरा त्वन्यबोधने॥

विषयपरत्वापरत्वाभ्यामेवैकस्यैव वेदस्य परविद्यात्वापरविद्यात्वे स्यातां, न तु ग्रन्थभेदेन इति।

—वनमालीय श्रुतिसिद्धांत संग्रहः [p. 105-6]

परापरविद्ययोर्विवक्षाभेदमात्रेणैव भेदेन तत्स्वरूपोक्त्यर्थत्वेन पूर्वग्रंथसार्थक्यात्।

—चन्द्रिकाप्रकाशः 1—4—5

अथ परेति। ऋगादिपरविद्याविषयत्वरूपतद्धर्माभिधानादित्यर्थः।

—तत्वप्रकाशिका—शर्करा श्रीनिवासतीर्थीया।

न केवलमुदाहृताथर्वणभाष्यतट्टीकाभिः ग्रन्थान्तरैश्चाविसंवादेन एकस्या एव ऋगादेः परविद्यात्वं; किंतु अत्रैवोपनिषदि 'यथा

तदक्षरमधिगम्यते' इति वाक्येन लक्षणमुक्त्वा तदुत्तरग्रन्थेन अक्षर महिमोक्तिपूर्वकं ऋगादीनामेव अक्षरशब्दितविष्णुबोधकत्वेन पर विद्यात्वं स्पष्टमुक्तं । व्याख्यातं च तथैव भाष्ये इति उपनिषत् स्वय-मेवलक्षणमभिधाय तत्समन्वय पूर्वकं ऋगादिरेव परविद्येति यदोदा जहार, तथैव विवृत्तं च भाष्ये सोपष्टंभं, तदा को नाम शक्नुयात्तद-न्यथयितुं ?

किंचादृश्यत्वाधिकरण सूत्रभाष्ये 'अथद्वे वाव विद्ये वेदितव्ये परा चैवापरा च तत्र ये... ... साऽपरा । अथ परा यया स हरिर्वेदित व्यो योऽसावदृश्यो निर्गुणः परः परमात्मा' इति श्रुत्यंतरमुदाहृतं । इदं च 'द्वे विद्ये वेदितव्ये' इति मुंडकश्रुतेस्समाख्यारूपं । मुंडक श्रुतौ 'यया तदक्षरमधिगम्यते' इत्युक्तमेव 'यया स हरिर्वेदितव्यः' इति समाख्यातमनया श्रुत्या । अत्र तत्वप्रकाशिका 'द्वे विद्ये इत्यत्र च यदा वेदाद्यन्यविषयतया योज्यते, तदा तस्यापरविद्यात्वं; यदापुनरेतैः स हरिर्वेद्यो भवति तदा परविद्यात्वमिति हरेः परविद्याविषयत्व-मुच्यते; तदुक्तं ऋगाद्या ........वाचकाः' इति। भावदीपे चः—'परापर विद्ययोर्भेदभ्रान्ति निरस्यन् परापरविषयत्वरूपोपाधिकृतभेदमाह 'यदेति' इत्यवतारिका ।

चन्द्रिकायामपि :—युक्तं च ऋगादिवेद्यस्यापि विष्णोः परवि द्याविषयत्वं यतः 'प्रवृत्तं च निवृत्तं च यथैकं कर्म कथ्यते । उपाधि भेदाद्विद्यापि तथैवैका पराऽपरा ॥ इत्यादि

एवं च स्वकीयविवरणेन, 'द्वे वाव' इत्यादि श्रुत्यंतर समा-ख्यया, एतद्भाष्यसूत्र भाष्याभ्यां, उदाहृत तत्वप्रकाशिकादिभिः ऋगा-दिरेव परविद्या, अक्षराधिगतिकरणत्वं च विष्णुप्रबोधजनकत्व-रूपं विष्णुवाचकत्वमेव मुण्डकाभिप्रेतमिति सिद्धं ॥

नन्वेवं सति 'नित्ययोगोऽपि शब्दानामर्थैनैव निषिध्यते' इति

यदङ्ग्रिराचार्यैः 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बंधः' इत्युक्त स्वाभाविक सम्बंधस्यैव वाच्यवाचकभावलक्षणस्य शब्दार्थयोरंगीकारात्, स्वाभाविकस्य च यावदाश्रयभावित्वेन ऋगादीनां विष्णुवाचकत्वस्यापि तथात्वापत्त्या सर्वदैव परविद्यात्वमिति कालभेदेन परापर विद्यात्वपर 'यदा' इत्युक्तिरयुक्तेति चेत्; सत्यं; ऋगादीनि परम मुख्यवृत्त्या महातात्पर्येण जगज्जन्मादिकारणं निरवधिकानन्तानवद्य कल्याणगुणपरिपूर्णं विष्णुमेव बोधयन्ति, अवान्तरतात्पर्येण मुख्यवृत्त्या तु कर्मदेवतादीनि बोधयन्तीति विभिन्नवृत्त्यैव ऋगादीनां विष्णु तदन्यवाचकत्वमिति सिद्धान्तः। न हि चक्षुरादिरिव शब्दो वृत्तिर्वा अज्ञातकारणं, किंतु ज्ञातमेव अर्थबोधजननायेष्ट इतिप्रसिद्धं। एवं च विदितमुख्यवृत्यवान्तरतात्पर्यकोऽधिकारी ऋगादीनि कर्मदेवतादि बोधकानीति निश्चिनोति, स एव अन्यो वा सात्विकप्रकृतिः विदित परममुख्यवृत्तिमहातात्पर्यः ऋगादीनि प्राधान्येन विष्णुबोधकानीति मन्यते। एवं वृत्तिद्वयेन अर्थद्वयबोधकत्वं न विरुद्धं। सर्वशब्दानां भगवद्वाचिनामपि प्रसिद्धार्थांतरवाचकत्वं समाकर्षाधिकरण सूत्रभाष्यादौ निपुणतरमुपपादितमनुसन्धेयं। इत्थं च ऋगादीनां परम मुख्य मुख्यवृत्तिभ्यां विष्णुतदन्यवाचकत्वे स्वाभाविके। अत एव सदातने। न कोपि तत्परिहर्तुमीष्ट इति विष्णुवाचकत्वतदन्यवाचकत्वाभ्यां परत्वापरत्वोभयमपि ऋगादीनां सर्वदा संभवत्येव। 'द्वे विद्ये वेदितव्ये' इत्यनेन द्वयोरपि ज्ञातव्यत्वाभिधानमप्यनयोरविरोधं सूचयति। विरुद्धयोर्द्वयोरुपादेयत्वायोगात्। नन्वेवं तर्हि 'यदे'त्युक्तिः कथं संगच्छत इति चेच्छृणु; विष्णुवाचत्वतदभावौ परापरविद्यात्वप्रयोजकतयाऽत्र न विवक्षितौ; किंतु विष्णुवाचकत्वेनानुसंधीयमानत्व तद भावावेव परापरविद्यात्वव्यवहारप्रयोजकतया विवक्षितौ। न हि विष्णुवाचकत्वं तदन्यवाचकत्वं वा ऋगादीनामविद्यमानपरापरविद्यात्वोत्पादकं भवेत्, किंतु उक्तरीत्या विद्यमानस्यैव परविद्यात्वादेः परि

बाधकमेवेति न कश्चित्क्षुद्रोपद्रवः। उक्तं चाभिनवचंद्रिकायां— 'यदा विष्णोर्न वाचका इति। यदा विष्णुवाचकत्वेनाननुसंहिताः अन्यवाचकत्वेनानुसंहिताः तदा अन्यबोधजनकत्वादपरविद्याः, यदा भगवद्वाचकत्वेनानुसंहिताः तदा परप्रबोधजनकत्वात्परविद्या इत्युच्यत इत्यर्थः। एतेन वाचकत्वस्य स्वाभाविकत्वेन सदातनत्वात् यदा वाचकाः यदा न वाचकाः इत्युक्तिरयुक्तेति परास्तं' इति।

अयं भावः वाचकत्वस्य सदातनत्वेऽपि न तदनुसंधानं सर्वदा सर्वेषां; तदनुसंधानस्योक्तरीत्या वृत्तितात्पर्यज्ञानाधीनत्वात्। न हि सर्वेऽपि सर्वदा तथाविधज्ञानवन्तः कालवैषम्यात्, अधिकारवैचित्र्याच्च। कृतयुगे सर्वेऽपि जनाः विष्णुवाचकत्वानुसंधानवन्तः; त्रेतादौ च न सर्वे, नापि सर्वदा तथाऽनुसंधानवन्तः; किंतु कालबलेन विष्णोरन्यत्रादरेण, स्वकीययोग्यतावशेन च अनुसंहित ब्रह्ममीमांसा शास्त्रव्युत्पादितन्यायाः सात्विकाधिकारिण एव कालविशेषे ऋगादीनां विष्णुवाचकतामनुसंदधते। इत्यसार्वकालिकानुसंधानघटित त्वादुपाधेः तन्मूलकः पराऽपरविद्यात्वव्यवहारोऽप्यसार्वकालिक इति यदेत्युक्त्यभिप्रायः। सर्वमिदं 'पंचरात्रं ऋगाद्याश्च' इत्यादि मुंडकभाष्येण, 'नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् किंचित्त दन्यथाजातं त्रेतायां द्वापरेऽखिलं॥' इति स्कांदवचनेन च स्पष्टमवगम्यते।

वेदस्य न केवलमुक्तरीत्या सर्वोत्तमार्थप्रतिपादकत्वेन अर्थत आधिक्यं, किंतु स्वरूपतोऽपि वेद एव सर्वोत्तमः अपौरुषेयत्वेनानाशंकितप्रामाण्यकत्वात्, कृत्स्नपौरुषेयोपजीव्यत्वात्, इतिहास पुराणादौ मूलटीकादौ च शास्त्रपरिगणनावसरे सर्वत्र 'ऋग्यजुस्सामाथर्वाश्च' इत्यादिना वेदस्यैव प्राथम्येन निर्देशात्; सर्वास्तिकदर्शनमूलत्वाच्च। शपथपूर्वकं निर्णीतं च भगवत्पादैः 'सत्यं सत्यं पुनस्सत्य-

मुद्धृत्य भुजमुच्यते । वेदशास्त्रात्परं नास्ति न दैवं केशवात्परं' ॥

—श्रीमन्महाभारत तात्पर्यनिर्णयः अध्यायः 2

ननु अपौरुषेयो वेदः प्रमाणमस्तु । किमिति पुराणादिष्वादरः क्रियत इति ? उच्यते । वेदानुसारित्वात्, वेदानुगृहीतत्वाच्च ।

—तत्वप्रदीप

तत्र वेदारेण्यकस्यापौरुषेयत्वेनोत्कर्षे वक्तव्ये....इत्यादि

—सत्तर्कदीपावळिः 1-1-3

उत्तराधिकरणन्यायेन तु श्रुतेरनाशंकितदोषतया स्वत एवाधिक्यसिद्धौ इत्यादि

—तात्पर्यचन्द्रिका 2. 1. 1.

स्वोक्ताश्वासाय यां व्यासस्सूत्रे सूत्रे जगौ हरिः ।
तां श्रुतिं कोऽपरः कुर्यान्मानं वा किं ततोऽधिकं ॥

—युक्तिमल्लिकागुणसौरभः

न विष्णुसदृशो देवो न मोक्षसदृशं सुखं ।
न वेदसदृशं वाक्यं वर्ण ॐकारसम्मितः ॥ इति

—श्रुतिसिद्धान्त संग्रहः [p. 50.]

'वेद एव हि शास्त्रपदेनोच्यते'

—ब्रह्मसूत्रसिद्धान्त मुक्तावलिः [p. 31]

उदेदिति पदमहिम्ना इंदिरासाम्येनेतरविद्यानां पृथगुक्तेश्च वेदविद्यैव विद्या

—तत्वप्रकाशिका टिप्पणीगुर्वर्थदीपिका

ननु अनुव्याख्याने 'परविद्याख्यं चक्रे शास्त्रमनुत्तमं । परमाख्य विद्यायाख्यां करोमि' इति ब्रह्ममीमांसाशास्त्रस्य परविद्यात्व-सर्वशास्त्रोत्तमत्वयोरुक्तेर्वेदस्य कथं सर्व शास्त्रोत्तमत्वमिति चेत्, उच्यते।

'ऋगाद्यां अपरा.........वाचकाः ।' इति भगवत्पादीयं व्याख्यानमप्येत-मेवार्थं सूचयति; ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायाऽनुपकृता हि वेदादयो विष्णोरवाचकाः, तदुपकृताश्च तस्य वाचका भवन्तीति' इति सुधायामेवानयोरैककंठ्यमुपपादितं। ब्रह्मसूत्रेण साक्षात्न्याया एव व्युत्पाद्यंते; ते च न्यायाः तात्पर्यज्ञापनेन वेदस्य विष्णुवाचकत्वं ज्ञापयंतीति वेदानां विष्णुवाचकत्वे ब्रह्मतन्त्रमितिकर्तव्यतैव, न तु साक्षाद्विष्णुबोधकं इति तदर्थः। एवं च वेदस्य परविद्यात्वव्यवहारौ-पयिक विष्णुवाचकत्वज्ञापकत्वात्परंपरया विष्णुबोधोद्देश्यत्वमात्रेण गौणपरविद्यात्वाभिप्रायेणैव परविद्याख्यमित्युक्तिः; मुख्यपरविद्यात्व-स्यैव भगवत्पादाभिमतत्वे परविद्यां,परमविद्यां' इत्येवावक्ष्यत्,नतूभयत्र आख्यापदघटना। साक्षाद्विष्णुवाचकत्वस्यानौपचारिकस्य ब्रह्मतंत्रे कथमप्यसंभवात्तस्य मुख्यपरविद्यात्वमसंभवदुक्तिकमेव; तथाच सुधा-'ननु वेदानामीश्वरप्रतिपत्तिजनकत्वाद्भवतु तद्विषयत्वं; शास्त्रं तु तेषामीश्वरप्रतिपादनानुसरणोपायन्यायविषयं कथमीश्वरपरमुच्यते। मैवं; वेदानामीश्वरमवबोधयतामितिकर्तव्यता हि मीमांसा; तेनो-पकारकत्वाद्भवति तद्विषया। तद्द्वारा शास्त्रमपि। न हि बीजस्यां कुरं जनयतः सहकारिणो जलादेरंकुरो न कार्यं। ननु मीमांसापि संभावनादिविषया, कथमीश्वरविषया भवति? मैवं.......मीमांसा-व्यापारस्यापि प्रमाणादिसंभावनाद्वारेणेश्वरावबोध एवोद्देश्य इति भवति तत्कर्मता।.... तथापि प्रतिबन्धनिवृत्तौ सत्यामेव निर्णय इति प्रतिबन्धकनिरासहेतोरपि विचारस्योपचारेण निर्णयहेतुत्वादु-पपन्नमीश्वरविषयत्वं इति ।

'अत्र जिज्ञासाया विषयसंबन्धसिद्धौ शास्त्रस्यापि तत्संबन्ध-सिद्धिरित्याशयेन जिज्ञास्योऽयमितिब्रुवता भाष्यकारेण शास्त्रस्य न स्वातंत्र्येण ब्रह्मरूपविषयसंबन्धोऽपि तु जिज्ञासाद्वारैवेत्यर्थसूचनात् तन्निवर्त्यां शंकां दर्शयति।'.......।'एवं विचारस्यांगत्वं वदतः किं

दोषसहितशब्दस्यान्यथाज्ञानजनकत्वं, विचारस्य च दोषनिरासेन प्रमितिजनकत्वमभिमतं ? उत सम्यग्ज्ञानजनकत्वं शब्दस्वभावो दोषाच्चान्यथाज्ञाने समुत्पन्ने विचारेण च निवृत्ते शब्दादेव निर्णय इत्यभिमतं ? नाद्यः; शब्दस्य विचारसापेक्षस्य प्रमितिहेतुत्वे प्रामाण्यस्य स्वतस्त्वभंग इत्याशयेनाह। यतस्तत्रापीति । तर्हि द्वितीयोंगीकार्यः किमित्याशंकते; किन्नामेति । अंगीकारेण समाधत्ते। प्रतिबन्धेति । ..........निर्णयोपकारकत्वस्य प्रकृते विवक्षितत्वात् तावतैव निर्णय विषयत्वं युक्तमित्याशयेन समाधत्ते, अत्रोच्यत इति ।

—वाक्यार्थचन्द्रिका

मीमांसायास्तत्कर्मकता-ईश्वरकर्मकता परंपरया भवतीत्यर्थः

—सुधा श्रीनिवासतीर्थीया

तथाच मीमांसायाः परंपरयेश्वरबोधजनकत्वादेव तद्विषयत्वमिति भावः

— सुधाकाशीटिप्पणी

अत्र 'तद्द्वारा, संभावनाद्वारेण' उपचारेण' इति असकृदुक्त्या, उक्तव्याख्यानैश्च ब्रह्मतंत्रस्य साक्षान्नेश्वरविषयकत्वं, किंतु परंपरयैव, तदप्यौपचारिकं, इति सतात्पर्यमुपपादितत्वात् उक्तरीत्या वेदेति कर्तव्यतात्वेनास्य शास्त्रस्य परविद्यात्वव्यवहारो गौण इति स्फुटमेव दार्शनिकानाम् ।

सति चैवं इमान्येव न्यायसुधावाक्यान्युदाहृत्य कोयमसूरुवास्तव्यः ताम्रपर्णी सुब्बाचार्यः ब्रह्ममीमांसाशास्त्रस्यैव मुख्यपरविद्यात्वमित्युदघोषयत् । तस्येदमेवोत्तरं :—उदाहृतवाक्यगतानि तद्द्वारा, संभावनाद्वारेण, उपचारेण'—इति पदानि, उदाहृतव्याख्यानानि च पश्य । साक्षात्परममुख्यवृत्त्या विष्णुबोधक-परंपरया उपचारेण विष्णु बोधकयोर्मुख्यामुख्यभावं विवेचय चेति ।

यदत्रोक्तं 'यया तदक्षरमधिगम्यते' इत्युपनिषदा विवक्षितमक्षराधिगतिकरणत्वं न पदशक्तिरूपं वाचकत्वं; अपि तु फलायोगव्यवच्छिन्नत्वरूपं विष्णवधिगतिकरणत्वमेव । तच्च ब्रह्मतन्त्रस्यैव संभवतीत्यादि । तत्तु अधिगम्यत इत्यस्य श्रुत्यंतरसमाख्या, उपनिषद्भाष्य, सूत्रभाष्य, टीकाटिप्पण्यादि बहुप्रमाणैर्वाचकत्वार्थस्य समर्थितत्वेन प्रागेव निरस्तमनुसंधेयं ।

यदप्यत्रोक्तं प्रतिलेखे (i) 'अक्षराधिगतिकरणत्वं चेत् कारणत्वस्यासाधारणकारणरूपत्वे यथाकथमपि ब्रह्मसूत्रं परविद्या न स्यात्; न हि ऋगादि सहकारेणाप्यस्यासाधारणकारणत्वं संभवति; अमुख्यतः परविद्यात्वं कथं ? न हि वेदस्याक्षरप्रतिपादकत्वे सहकारिभूतं अमुख्यतः परविद्येति कुत्राप्युक्तं (ii) किंतु अक्षरगत्ययोगव्यवच्छिन्नत्वरूपं कारणत्वं वक्तव्यं तच्च ब्रह्मसूत्रविशिष्टवेदानामेव भवत्परविद्यात्वं विशिष्ट विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायात् ब्रह्मसूत्रेषु पर्यवस्यतीति को विरोधः' [p. 30] इति.

तत्त न विचारसहं;कारणत्वं असाधारणकारणत्वं वा, अक्षरगत्ययोगव्यवच्छिन्नत्वं वेति द्वेधा विकल्प्य ब्रह्मतंत्रस्य अक्षरगत्यसाधारेणकारणत्वं निरस्य, अक्षरगत्ययोगव्यवच्छिन्नत्वरूपकारणत्वं संभवतीत्युपपादयतः असाधारणकारणत्वादिपरिभाषैव नावबुद्धा । विशेषधर्मावच्छिन्नकार्यतानिरूपितकारणत्वमेव असाधारणकारणत्वमिति प्रकरणग्रंथ एव स्पष्टं; प्रकृते अक्षरगतित्वमेव तादृशविशेषधर्मः; तदवच्छिन्नकार्यतानिरूपितकारणत्वं च अक्षरगतेः सहकारिणः शास्त्रस्य सर्वथा संभवत्येवेति तन्निराकरणमसंगतमेव; उक्तं च तत्रैव सुधायां । 'नहि बीजस्यांकुरं जनयतस्सहकारिणो जलादेरंकुरो न कार्यं' इति । व्याहतं चासाधारणकारणत्वं निराकृत्याक्षरगत्ययोगव्यवच्छिन्नत्वोररीकरणं । असाधारणकारणत्वं

सामान्यधर्मः अयोगव्यवच्छिन्नत्वं विशेष इति खलु दर्शनतत्वं। आलोचय; सामान्यधर्मं निराकृत्य विशेषांगीकरणं कथं न व्याहतमिति ।

विशिष्टे विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायसंचरणं चात्र सर्वथा न युक्तं । सति विशेष्ये बाध एव हि विशेषणोपसंक्रांतेरवसरः; ब्रह्मसूत्रविशिष्टवेदमुद्दिश्य विधीयमानं ब्रह्मसूत्रे पर्यवस्यतीति खलु तवाशयः । अत्र विशेषणविशेष्ये विवेचनीये; ब्रह्मसूत्रं विशेषणं; वेदो विशेष्यः; वेदे च गुणपूर्णत्वादिविशिष्ट विष्णुवाचकत्वं स्वाभाविकमिति सप्रमाणमुपपादितं प्रागेवेति विशेष्ये बाधस्यैवाभावेन विशेषणोपसंक्रांतेर्नावसरः। 'विशेष्यभूता ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृताः केवल वेदादयो विष्णोरवाचकाः' इति बाधोपपादनं तु विवेचनशून्यमेव। अनुपकृता इति विशेषणमुक्त्वा पुनः केवलेत्युच्यते त्वया। विशेषणराहित्यं खलु कैवल्यं, अनुपकृतेति विशेषणोक्त्यनंतरं कैवल्यं कथं संभवतीत्यालोचय। अनुपकृतेत्यंशपरित्यागे च वेदादयः विष्णोरवाचका इत्येवोक्तं स्यात् तच्च प्रमाणविरुद्धं वेदे विष्णुवाचकत्वस्य स्वाभाविकत्वात्, इति कथमपि विशेष्ये बाधासंभवादेतन्न्यायसंचरण मयुक्तमेव ।

यच्च ब्रह्मसूत्रस्यैव मुख्यपरविद्यात्वे तच्चानुत्तमं शास्त्रमिदमेव विवक्षितं' इति सुधावाक्यं प्रमाणीकृतं। तदप्यसाधकमेव। तच्चेति वाक्यानंतरं 'निर्णेतव्यार्थानां ऋगादिपदोपलक्षितानामशेषशास्त्राणामपरविद्यात्वेनोक्तत्वात्। अन्यस्याप्रसंगात्परत्वासंभवाच्च; संभवति त्वस्य परत्वमनुग्राहकत्वात्' इतीमानि वाक्यानि तद्विवरणपराणि संति। अनेनेदमेवेत्येवकारव्यवच्छेद्यं विष्णुविषयत्वेनानिर्णीतत्वदशापन्नमेव ऋगादिकं, न तु निर्णीतं तत् इत्युक्त्वाऽस्य शास्त्रस्य साक्षादक्षराधिगत्यकरणत्वेऽपि तदिति-

कर्तव्यतारूपत्वात्परविद्याभूतकृत्स्नवेदानुग्राहकत्वरूपं परत्वं संभवतीति तच्चेति वाक्यार्थ उक्तो भवति । इत्थं चानुग्राहकत्वरूपपरत्वमुक्तरीत्या गौणमेवेति कथमिदमस्य शास्त्रस्य मुख्य परविद्यात्वं साधयेत्' विवेचयन्तु सुधियः । उक्तं च सुधायामेव । 'संभवति त्वस्य परत्वं अनुग्राहकत्वात्' इति । अत्र पंचम्या अभेदार्थकत्वेन ब्रह्मसूत्रस्य वेदानुग्राहकत्वरूपं परत्वं संभवतीत्यर्थः स्फुट एवेति ।

एतत्प्रकरणस्योपसंहारसुधा चामुमेवार्थं द्रढयति । 'तथाऽपि केवलस्य न परविद्यात्वं लभ्यत इति चेत्, मालाभि । वेदादीति कर्तव्यतारूपस्यास्य पृथक्प्रामाण्यानभ्युपगमात् ।' इत्युपसंहारवाक्यं ।

अत्रटिप्पणवः—'नन्वेवं तर्हि वस्तुत उपकृतस्य ऋगादेरनुपकृतऋगाद्यपेक्षया परविद्यात्वं सिध्येत्; न तूपकारकप्राधान्यविवक्षामात्रेण भवदभिमतमुपकारकस्यैव परविद्यात्वमित्याशंकां सयुक्तिकमनंगीकारेण परिहरति । तथापीति ।'

—वाक्यार्थचन्द्रिका. [प. 14]

ननु यदि ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायोपकृतानां विष्णुप्रतिपादकत्वं तर्हि केवलस्य ब्रह्ममीमांसाशास्त्रस्याक्षरशब्दितविष्णवधिगतिसाधनत्वाभावेन केवलस्य परविद्यात्वं न लब्धमित्यभिप्रेत्य शंकते। तथापीति । इष्टापत्त्या परिहरति । मालाभीति । वेदेति कर्तव्यतारूपस्यास्यवेदानुग्राहकतामंतरेण ब्रह्मप्रमितिजनकत्वाभावात्केवलवेषेण परविद्यात्वाभावेऽपि वेदानुग्राहकत्व विशिष्टवेषेण तज्जनकत्वात्स्वाभिमतं परविद्यात्वं युक्तमिति भावः ।

-कंबालूरु रामचन्द्रतीर्थीय प. 5

तथाचैतमेवार्थमित्युक्तं । 'तच्चेति' वाक्ये न केवलस्य परविद्यात्वमित्यर्थस्यैवोक्तत्वादेतच्छब्देन तस्यैव परामर्शादिति भावः ।

स्यादेवं यदि केवलस्य परविद्यात्वमुक्तं स्यात्, न चैवं तत्रेतिवाक्ये-'इदमेवे'त्येवकारेण विष्णुविषयत्वेनानिर्णीतत्वदशापन्नस्यैव वेदादेर्व्यवच्छिन्नत्वात्। अत एव तत्र निर्णेतव्यार्थानामित्युक्तमित्याशयेन समाधत्ते। मा लाभीति। इतिकर्तव्यतारूपस्य सहकारिरूपस्य पृथग्वेदादिव्यवच्छेदेन विष्णुप्रमितिसाधनत्वानुपगमादित्यर्थः।

— काशीटिप्पणी

'एवं च ब्रह्ममीमांसाशास्त्रस्य साक्षाद्विष्णुप्रतिपादकत्वं नास्ति। अतः केवलस्यास्य परविद्यात्वं नानुमतं। किंतूक्तरीत्या वेदेतिकर्तव्यतात्वमेव साक्षाद्विष्णुवाचकत्वात्मकवेदनिष्ठ परविद्यात्वव्यंजकत्वरूपमेष्टव्यं। इदमेव च तस्य परविद्येति व्यवहारे निमित्तं। 'वेदेतिकर्तव्यतारूपस्यास्य पृथक्प्रामाण्यानभ्युपगमात्' इति खलूक्तं। तदर्थस्तु न साक्षाद्विष्णुप्रमितिजनकमिदं। किंतु विष्णुप्रमितिजनकस्य वेदस्यांगमेव। अंगं तु अंगिनिष्ठकार्यजननशक्तिनियामकमेव। न त्वंगिकार्यातिरिक्तप्रधानकार्यजनकमित्येवं वेदस्य विष्णुप्रमितिजनकत्वमुपकुर्वतोऽस्य शास्त्रस्य अंगिवेदविषयातिरिक्तविषयः प्रधानो नास्ति। किंतु स एव परंपरया विषयोऽभवति। अत एवास्य गौणं परविद्यात्वं। मुख्यपरविद्यात्वं तु वेदस्यैवेति 'ता एव परमा विद्या' इत्याथर्वणभाष्यादिना ऐककंठ्यम् 'परविद्याख्यमि'त्यादेरिति नानुपपत्तिः। शास्त्रश्रुत्योरंगांगिभावोऽपि मूलटीकादवेवोक्तः।

एवं हि प्रयोगे अंगांगिभावोऽप्यधिको विज्ञायते।

—न्यायसुधा प. 7

श्रुतिमूलतयेति प्रयोगे हि तद्विचारपरत्वाच्छास्त्रमंगं। अंगि तु श्रुतय इत्येवं विज्ञायते। मूलमूलिनोरंगांगित्वस्य काव्यटीकादौ प्रसिद्धेः

—न्यायसुधापरिमळ प. 15

एवमेव व्याक्यार्थचंद्रिका (प. 24) यादुपत्य (9) काशीटिप्पणी (47) गुर्वर्थदीपिका (प. 6) दि सर्वटिप्पणीकारैरप्यविगीततयांऽगांगिभावः सूत्रश्रुत्योर्व्याख्यातः। तथाच श्रुतेरंगित्वेन प्राधान्यं, शास्त्रस्यांगत्वेनाप्राधान्यं च स्फुटमिति श्रुतिशास्त्रयोर्मुख्यामुख्य परविद्यात्वे एवेति सिद्धं।

अत्र प्रतिविहितं सुब्बाचार्येण 'लिंगभूयस्त्वात्तद्धि बलीयस्तदपीति (ब्रह्मसूत्र तृतीयाध्याय तृतीयपादे) प्रदानस्य बलवत्वे —......... इत्यादि सिद्धान्तितं न्यायमुक्तावल्यां। अतोंगस्य दौर्बल्यं न सार्वत्रिकमिति ज्ञायते' इति

—विद्याविवेचनविचार (प. 33–34)

तदपि लिंगभूयस्त्वाधिकरण तत्वप्रकाशिका, उदाहृतन्यायमुक्तावलीभावानवबोधविजृंभितं। तद्भावश्च सविमर्शं निरूपितः प्राचीनाचार्यैरेवेति तदेवात्रानूद्यते।

'बलीयस्त्वसमर्थनादिति। प्रधानगतकार्यजननशक्तिनियामकत्वसमर्थनादित्यर्थः। लोके हि द्विविधमङ्गं दृश्यते। किंचित्प्रधानगतकार्यजननशक्तिनियामकं यथोपनयनादि। तेन विना प्रधानस्य वेदाध्ययनस्य क्वापि धर्मजनकत्वाभावात्। प्रत्युताधर्मस्यैव जननात्। किंचित्सौष्ठवापादकं यथा प्राङ्मुखत्वादि। तेन विनाऽपि धर्मजनकत्वात्। गुरुप्रदानं तु न प्राङ्मुखत्वादिवत् सौष्ठवापादकं, किंतूपनयनादिवत् प्रधानशक्तिनियामकमेवेति समर्थ्यत इति भावः। एतेन अंगं भवति प्रधानात्प्रबलं चेति व्याहतमिति परास्तं' इत्यादि।

—अभिनवचन्द्रिका [अध्याय 3–3–27–45]

प्रदानवदेव हि तदुक्तमिति सूत्रे श्रवणगुरुप्रदानयोः प्रधानेतिकर्तव्यतारूपयोर्गुरुप्रदानं बलवदित्युपपादनार्थं तत्वप्रकाशिका 'न

चेतिकर्तव्यतात्वेन दौर्बल्यं, यागीयहिंसायामितिकर्तव्यताया एव प्राबल्यदर्शनात्' इति। तत्रापि को विरोधः? न हि करणेतिकर्तव्यतयोः प्रधानगुणभावोऽत्र व्यत्यासितः। किंतु न हिंस्यात्सर्वा भूतानि' इति श्रुतेः पापसाधनं हिंसैव प्रधानं कर्म; तच्च यज्ञे 'पशुमालभेत' इति विहितत्वात्क्रियते। तत्र चोपाकरणादिसंस्कारविशेषः तदीयां पापसाधनताशक्तिं प्रतिबध्नाति। न च यागेनैव साऽपोदितेति वाच्यं। यथोक्तेतिकर्तव्यताविकलस्य यागस्य तदपवादकत्वाभावात्.........
.....ज्यायस्त्वोक्तेरप्यभिप्राय उक्तः। प्रधानेन फले जननीये उपकारकत्वमेव ज्यायस्त्वं। तदनुपकृतेन प्रधानमात्रेण फलळेशस्याप्युत्पादयितुमशक्यत्वात्। यत्पुनरेतस्यांगत्वेनाप्राधान्यं यागस्यांगित्वेन प्राधान्यं तदनुमतमेव.......... यथा हि 'राजपुरुषमानय' इत्यत्र राज्ञो विशेषणत्वेन क्रियान्वयराहित्येनाप्रधान्येऽपि पुरुषं प्रति स्वामितारूपप्राधान्यस्य न हानिः। पुरुषस्यापि विशेष्यत्वेन क्रियान्वयित्वेन च प्रधान्येऽपि भृत्यतारूपस्याप्राधान्यस्य न हानिः। तथाऽत्र करणेतिकर्तव्यतारूपयोः प्राधान्याप्राधान्ययोर्न हानिरिति.........टीकाभिप्रायः।

—अद्वैतकालानलः

इत्थं च करणेतिकर्तव्यतयोः प्रधानगुणभावव्यत्यासं विनैव लिंगभूयस्त्वाधिकरण टीकाटिप्पण्यादिवाक्यानामुपपद्यमानत्वात्, तथैव नेयत्वाच्च नैतद्वाक्यबलादपीतिकर्तव्यतारूपब्रह्मसूत्रस्य प्राधान्यं सिध्यति।

यच्चोक्तं 'अतो नैतादृशं किंचित्प्रमाणतममिष्यते' इति प्रामाण्यप्रकरणोपसंहारवाक्यं ब्रह्मसूत्रस्य सर्वोत्तमप्रामाण्ये, वेदादप्युत्तमत्वे प्रमाणमिति। तदपि संदर्भापरिज्ञाननिबन्धनं। तथाहि 'आप्तवाक्यतया तेन श्रुतिमूलतया तथा। युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महत्। दृश्यते ब्रह्मसूत्राणामेकधाऽन्यत्र सर्वशः। अतो नैतादृशं किंचित्प्रमाणतममिष्यते।' इति हि प्रकरणं।

अत्र आप्ति-श्रुति-युक्तिमूलत्वात्मकैस्त्रिभिः प्रमाणैः प्रामाण्य-साधनं खलूपक्रान्तं। साधकतयोपन्यस्तप्रमाणानि यत्र संभावितानि तेषामेवात्र प्रामाण्यं प्रतिपिपादयिषितमित्यत्र न विवादः। आप्तिमूलत्वादिप्रमाणानि च पौरुषेयग्रन्थेष्वेव, नापौरुषेयवेद इति च संप्रतिपन्नं। एवं च आप्तिमूलत्वादिना प्रामाण्यं साधयता पौरुषेयग्रन्थप्रामाण्यसाधनमेवोपक्रान्तमिति पौरुषेयग्रन्थानामेव प्रामाण्यतारतम्यप्रदर्शनपरमिदं प्रकरणमिति क्व वेदप्रामाण्यप्रसंगस्यावसरः? अत एव 'नैकधाऽन्यत्र सर्वशः' इत्यनेन मनुवाक्यादिरूप पौरुषेयग्रन्थानामेव व्यावृत्तिं प्रदर्श्य, महदाप्तिमूलत्वादिमद्ब्रह्मसूत्रं प्रमाणतममित्यभिहितं सुधायां, इति कथमिदं ब्रह्मसूत्रस्य वेदोत्तमत्वं साधयेत्?

किं चात इत्यनेन श्रुतिसंवादित्वघटितप्रमाणत्रयावसित प्रामाण्यकत्वमेव ब्रह्मसूत्रस्योत्तमत्वे निमित्तमुक्तं। श्रुतिसंवादाभावे च त्रिविधप्रामाण्यासंभवेनोत्तमत्वं न सेत्स्यतीति ब्रह्मसूत्रप्रामाण्ये श्रुति प्रमाण्यस्य प्रयोजकत्वेन श्रुतिरुपजीव्येत्युक्तं भवति। उक्तं च न्यायामृते 'यत्प्रामाण्यं स्वरूपसिध्यर्थं अपवादनिरासार्थं वा यत्प्रामाण्यायत्तं तत्तस्योपजीव्यं' इति। तथाच ब्रह्मतंत्रं स्वोपजीव्यभूतां श्रुतिमेव कथमधः कुर्यात्? विमृशन्तु विमर्शकाः।

यत्तु भूमिकायां vi श्रुतिसंवादित्वं च श्रुत्यनुक्तार्थप्रतिपादक भारतार्थनिर्णायकत्वेन सूत्राणां सर्वत्र न संभवति च' इत्युक्तं। दुरुक्तं तत्। 'पुनस्तस्यार्थवित्तये चकार ब्रह्मसूत्राणि' इत्यादि बहुप्रमाणैः श्रुत्यर्थनिर्णयायैव ब्रह्मसूत्रप्रणयनस्यावगमात्। किंच त्रयोविंशत्यधिकद्विशताधिकरणतया [223] विभक्ते ब्रह्मतंत्रे नैकस्याप्यधिकरणस्य श्रुत्यतिरिक्तं विषयवाक्यं प्रादर्शि भाष्ये। सर्वत्रापि श्रुतिरेव विषयवाक्यतया उदाहृतेति सर्वेषामेवाधिकरणानां श्रुत्यर्थनिर्णायकत्वं

स्फुटमेव। अथापि श्रुतिसंवादित्वस्य क्वाचित्कतां वदसि चेत् श्रुत्यर्थानिर्णायकं केवल महाभारतार्थनिर्णयायैव प्रवृत्तं किंचिदधिकरणं श्रृंगग्राहिकया प्रदर्श्य सफलीकुरु त्वदीयं मनोरथं ; न हि प्रतिज्ञामात्रेणेष्टसिद्धिः ।

किंचैवं सति आचार्योक्तश्रुतिसंवादित्वघटितत्रिविधप्रामाण्य वत्वहेतोस्त्वदुक्तकेवलश्रुत्यतिरिक्तार्थनिर्णायकसूत्रभागेऽसिध्या, तेन प्रमाणतमत्वसाधनमपि दूषितं स्यादिति मूलोच्छेदापत्तेः वृद्धिमिच्छतो मूलहानिरिति न्यायापातः ।

यत्तु ब्रह्मसूत्रस्यैवासंकुचितसर्वशास्त्रोत्तमत्वे साधकत्वेनोपन्यस्तं वाक्यार्थचन्द्रिकावाक्यजातं तदप्यसाधकमेव; प्रत्युतास्मदुक्तनिर्णायकशास्त्रोत्तमत्वमेव द्रढयति। तथाहि :–'विकल्पेन भगवद्वाचकेष्वपि ऋगादिषु यदा तदा शब्दप्रयोगादुपकारकविशेषसाहित्य-तदभावविवक्षायाः सूचितत्वादुपकृतानां परविद्यात्वे परिशेषणीयोपकारकप्राधान्यविवक्षया प्रसक्तप्रतिषेधेन परिशेषोनानुपपन्न इत्याह। 'ऋगाद्या' इति' इति। नात्र त्वदभिमतोपकारकस्यैव परविद्यात्वाभिधायकं किंचिच्छ्रूयते। 'उपकृतानां परविद्यात्वे' इत्यनेनोपकृतस्यापि परविद्यात्वाभिधानात्। ब्रह्मतंत्रस्योपकारकप्राधान्यविवक्षया परविद्यात्वं तूक्तं। नैतावता तस्यैव परविद्यात्वमिति ग्रंथाशयः। न हि विवक्षाधीनं तत्वं; व्यवहारः परं विवक्षया निर्वोढुं शक्यः। तथाहि :– ऋगादीनामेव परविद्यात्वात् ब्रह्मतंत्रे परविद्येत्याचार्यैः कथमुक्तमिति संभाविताशंकापरिहारायोपकारकप्राधान्यविवक्षया ब्रह्मतंत्रमपि उक्तरीत्या परविद्येत्याचार्याशयाविष्करणमेवैतद्वाक्यसंदर्भाशयः । स्पष्टीकृतं चानुपदमेव 'नन्वेवं तर्हि वस्तुत उपकृतस्य ऋगादेरनुपकृतऋगाद्यपेक्षया परविद्यात्वं सिध्येत्, न तूपकारकप्राधान्यविवक्षामात्रेण भवदभिमतमुपकारकस्यैव परविद्यात्वमित्याशंकां सयुक्तिकमनंगीकारेण परिहरति' इत्युत्तरवाक्येन ।

किंचैतदर्थकतयैव व्याख्यातश्चायं ग्रंथसंदर्भः पूर्वाचार्यैरेवेति नेदं तत्पक्षसाधकं। तथाहिः—

'प्रसक्तप्रतिषेधेनेति। प्रसक्तप्रतिषेधकरणेन; ऋगादिकं परविद्याशब्दोक्तं नेति प्रसक्तप्रतिषेधस्योपकारकप्राधान्यविवक्षया करणेनेति यावत्'।

— वाक्यार्थरत्नमाला—वाक्यार्थचन्द्रिकाव्याख्या, लिखिता. c. 938
(Oriental research Institute, Mysore.)

उक्तं च विवक्षाया व्यवहारमात्रनिर्वाहकत्वं प्रामाणपद्धतौ 'तत्रावांतरव्यापारप्राधान्यविवक्षयाऽर्थेन्द्रियसन्निकर्षः प्रत्यक्षमित्युच्यते। क्वचित्तु धर्मिप्राधान्यविवक्षया स्वस्वविषयसन्निकृष्टमिंद्रियं प्रत्यक्षमित्युच्यते' इति। एवंच विवक्षाभेदेन व्यवहारभेदेऽपि न तत्ववैपरीत्यं। अस्मन्मते इन्द्रियमेव प्रधानं, करणं च। सन्निकर्षोऽवांतरव्यापारोऽप्रधान एवेति तत्वम्।

यद्यपि ब्रह्ममीमांसाशास्त्रस्य सर्वदा परविद्यात्वमेव। ऋगादीनां तु दशाभेदेनेति ब्रह्मतंत्रमाहात्म्यवर्णनप्रसंगे 'ऋगादीनां कर्मप्रतिपादकत्वदशायां ब्रह्मसूत्राणामननुग्राहकत्वात्, अननुग्राहकत्वदशायां च ब्रह्मसूत्राणां प्रामाण्यमेव नास्ति ... ... विद्यात्वदशायां सर्वदा परविद्यात्वरूपमहिमा ब्रह्मसूत्राणामेवेति' क्वचित् [v] भूमिका, वेद व्यतिरेकेण विद्यात्वस्यैवाभावेन विद्यात्वदशायां च परविद्यात्वमेवेति ब्रह्मसूत्राणामुत्तमत्वं सूचितं। किंचास्य शास्त्रस्य सहकारिरूपत्वात् वेदाद्यननुग्राहकत्वदशाया एवाभावात् सदाऽस्य शास्त्रस्य परविद्यात्वं' इत्यन्यत्र [p. 9] भाष्यटीकादिसद्ग्रंथप्रतिपादितार्थानवगमे ब्रह्मतंत्रस्याप्यप्रामाण्यापत्त्या विद्यात्वमेव नास्ति' इति चापरत्र [p. 37] इति बहुधा लिखितं दृश्यते। अत्र ब्रह्मसूत्रस्याननुग्राहकत्व दशा आद्यवाक्येनाभ्युपगता; तृतीयवाक्येनाननुग्राहकत्व दशाभाव उक्त इति स्वव्याहतिः। किंच ब्रह्मसूत्रमहिमावर्णनमुपक्रम्य तदुपपं

भक्तया वेदव्यतिरेकेण तस्य विद्यात्वमेव नास्तीति वदता तस्याप-कर्ष एव स्पष्टीकृतः। प्रधानविषयीभूतविष्णुप्रमितिजनकत्वं वेदस्यैव, तत्रेदं सहकारीति, अस्यासंकीर्णप्रधानविषयो नास्तीति हि तदर्थः। एवं च ब्रह्मसूत्रस्य स्वतः प्रधानविषयस्यैवाभावे साक्षात्प्रधान विषयप्रतिपादकवेदादुत्कर्षो वा कथं सिध्येदिति विरोधश्च। वेदव्यति-रेकेण विद्यात्वमेवानापन्नं ब्रह्मतंत्रं कथं वेदादुत्तमं भवेत्? पृथग्वि-द्यात्वसंभव एव हि तारतम्यविचारस्यावसरः। अतोऽनयोः पृथग्वि-द्यात्वमनापन्नयोस्तारतम्यचिन्तैव न प्रसरतीत्यवधेयं। एतेन निर्णाय-कनिर्णेययोर्निर्णायकस्यैव प्राबल्योक्तिः परास्ता।

यदपि 'ननु सुधायां प्रामाण्यस्य स्वतस्त्वेऽप्यप्रामाण्यशंकानिरा-सार्थोऽयं प्रयत्न इत्युक्त्या वेदस्यापौरुषेयत्वेनाप्रामाण्यशंकैव नास्तीति वेदापेक्षया पौरुषेयग्रंथस्योत्तमत्वं कथमिति चेदित्थं—तथाहि:-विषयप्रयोजनवशेनाप्यतिशयो द्रष्टव्यः। यथा भारतस्य वेदाद्यपेक्षयो-त्तमत्वं' [p.10] इत्यादि वल्गितं; तदपि शास्त्रमर्यादानभिज्ञानादेव; तथाहि; वेदविषयापेक्षयाऽतिशयितो विषयः, अतिशयितं प्रयोजनं च ब्रह्मसूत्रभारतयोरस्तीति पौरुषेययोरपि तयोर्वेदादुत्तमत्वमिति ह्यस्याशयः। स चाप्रामाणिकः, वेदार्थनिर्णयाय प्रवृत्तस्य सूत्रस्य पृथक्प्रामाण्याभावस्यैव सुधोक्तत्वेनातिरिक्तविषयस्यैवाभावेन क्वा-तिशयितविषयकत्वं सूत्रादेः। विष्णुसर्वोत्तमत्वसिद्धान्ते विष्णोरति-शयितस्य शशविषाणायमानत्वात्, वेदविषयविष्णुविषयकस्य भारतस्याप्यतिशयितविषयकत्वमसदेव। एवमेव अत्युत्तममोक्ष-प्रयोजनकत्वं च त्रयाणां समानमिति विषयप्रयोजनातिशयः खपुष्प-तुल्य इति तेनापि वेदादाधिसाधनमसंभवदुक्तिकमेवातोऽना-शंकितप्रामाण्यकोऽपौरुषेय वेद एव सर्वोत्तमं शास्त्रमिति सुधियो विभावयन्तु।

यच्च किंच चन्द्रिकायां ..........[p. 13] इत्यादिना अदृश्य-

त्वाधिकरणचन्द्रिकावाक्यमनूद्य तस्य ऋगाद्यतिरिक्तब्रह्मसूत्रस्यैव परविद्यात्वाभिप्रायकत्ववर्णनम् । तदत्यंतासंगतमिति तद्वाक्यदर्शिनां स्पष्टमेव । इत्थं हि चन्द्रिका 'प्रवृत्तं च निवृत्तं च यथैकं कर्म कथ्यते । उपाधिभेदाद्विद्याऽपि तथैवैका पराऽपरा ॥..... .. .....यथैकमेवान्नमुपाधिभेदात्पथ्यमपथ्यं च तथा ऋगादिरूपैकैव सन्न्यायैः प्रमितब्रह्मविषयकशक्तितात्पर्योपाधिना परा........ अन्यथा त्वपरा ..... तदुक्तं ऋगाद्या.......... वाचकाः । इति ॥ अत्रोपाधिभेदाद्विभिन्नपदोदितैककर्म- एकान्नदृष्टान्तप्रदर्शनपूर्वकमुपाधिभेदादेकस्यैव ऋगादेः परापरव्यवहारविषयत्वं स्पष्टीकृतं । प्रमाणीकृतं च सावधारणमाथर्वणभाष्यं । दृष्टांतदार्ष्टांतिकयोरेकशद्बश्च प्रयुक्तः। तदुत्तरवाक्यावतारिकायां 'स्वमते पराऽपरविद्यात्वमुपाधिभेदेनैकत्रैव टीकायुक्तं व्युत्पाद्य' इति प्रकाशे भाववर्णनं च कृतं। सति चैवं ऋगाद्यतिरिक्तस्य ब्रह्मसूत्रस्यैव विद्यात्वमुक्तवाक्यार्थ इत्युक्तिः भावानवबोधमूला वा? असदाग्रहमूला वेति विवेचयन्तु विवेचकाः ।

एवं ब्रह्मसूत्रस्यैव परविद्यात्वे साधकत्वेन तदुपन्यस्तं, परपक्षे बाधकत्वेनोदाहृतं सर्वमपि व्याहत्यादिदोषदुष्टतयाऽसंबद्ध प्रलाप एवेति व्युत्पन्नविमर्शका विदांकुर्वन्तु ।

अपरं च 'किंच श्रीश्रीमद्वादिराजतीर्थ श्रीमच्चरणाः सुधाटिप्पण्यां अपरविद्यात्वेनोक्तवेदविद्याप्यपौरुषेयत्वाद्यदा प्रमाणं तदा ततोप्युत्तमविद्यात्वेनोक्ताक्षरविद्यारूपब्रह्ममीमांसायाः प्रामाण्यं किं वक्तव्यमिति भाव इति वेदादपि ब्रह्ममीमांसाशास्त्रस्योत्तमत्वं कंठत एवोक्तवंतः' [p. 13] इत्युदाहृतं । तदपि भावानवबोधविजृंभितं । तथाहि :- 'श्रीमद्वादिराजपूज्यपादैरेव विरचितायां तत्वप्रकाशिकाटिप्पण्यां 'उदेदिति पदमहिम्ना इंदिरासाम्येनेतरविद्यानां पृथगुक्तेश्च वेदविद्यैव विद्या' [p. 4] तत्रैव 'अथेत्यारभ्य चकारेत्यंतं भाष्यं

तु वेदस्येष्टसाधनबोधकतामनादित्वेन सर्वोत्तमप्रामाण्यं च प्रदर्श्य, तदर्थनिर्णयायेति वचनाद्ब्रह्मसूत्राणामपीष्टसाधनावबोधकत्वं श्रुतिमूलतया, श्रौतयुक्तिमूलतया च सर्वोत्तमप्रामाण्यं च प्रसाधयितुं प्रवृत्तमिति हृदयं।' (p. 5) इति वर्णितं। भाविसमीरत्वेन संभावितानामेतेषां पूज्यपादानां वचनमतिगंभीरतया भावगर्भितमिति संप्रतिपन्नं। उक्तसुधाटिप्पणीवाक्यं च उक्तस्थलद्वयगत तत्वप्रकाशिकाटिप्पणीवाक्याविरोधेनैव नेतव्यं। न हीदृशमहानुभावानां विरुद्धवचनं संभावितं। उदैदित्यादि प्रथमवाक्येन सयुक्तिकं वेदस्यैव विद्यात्वं निर्धारितमवधारणेनेति स्पष्टं। अनेन सर्वासु विद्यासु वेदस्य प्राधान्यमभिप्रेयत इति सिद्धं। उदाहृतद्वितीयवाक्येन च वेदस्यानादित्वेन सर्वोत्तमप्रामाण्यमुक्त्वा, तन्मूलत्वादिना ब्रह्मसूत्राणां सर्वोत्तमप्रामाण्यसाधनं भाष्यभाव इति वर्णितं। अत्रोभयोर्वेदसूत्रयोः सर्वोत्तमप्रामाण्यमित्येव श्रूयते। उभयोस्सर्वोत्तमत्वं च न संभवति, विलक्षणत्वात्। अतः संकोचः कार्यः। वेदप्रामाण्ये संकोचस्तु कर्तुमशक्यः; तस्यानादित्वेनानाशंकितप्रामाण्यकत्वमहिम्नोऽनितरसाधारणत्वादतः परिशेषाद्वेदमूलत्वादिना प्रामाण्यमश्नुवतो ब्रह्मसूत्रस्यस्योपजीव्यवेदादुत्तमत्वस्यासंभावितत्वाच्च निर्णायक सर्वग्रंथेष्वेतत्सूत्रस्यैवोत्तमत्वमिति सूत्राणामुत्तमत्वमेव संकोचयितव्यं। सूचितं चैवं संकोचकरणमुत्तरत्र 'इतरसूत्रेभ्योऽप्यांजस्यं सर्वशब्दनिर्णायकत्वं चास्तीति भावेन—' इत्यादिवदद्भिः पूज्यपादैरेव। एवं च वेदस्य सर्वविद्याप्राधान्यं ब्रह्मसूत्रस्य निर्णायकोत्तमत्वं चोक्तवतां पूज्यपादानां तद्विरुद्धार्थवर्णनमसंगतमेव। अतस्सुधाटिप्पणीवाक्यमपि तदेकवाक्यतया व्याख्येयं। तथाहि :— एतद्वाक्ये वेदविद्येत्यतः प्राक् निर्णेतव्यार्थेति योज्यं। अक्षरविद्येति भावप्रधानो निर्देशः। रूपशब्दो रूप्यतेऽनेनेति व्युत्पत्त्या ज्ञापकपरः। तथा च निर्णेतव्यार्थ वेदविद्यातोऽप्युत्तमविद्यात्वेनोक्तायास्तस्या एव वेदविद्याया अक्षर-

विद्यात्व (अक्षरबोधकत्व) ज्ञापकब्रह्ममीमांसायाः प्रामाण्यं किं वक्तव्यमित्येव पूज्यपादानामाशय इति ब्रह्मसूत्रस्य वेदादुत्तमत्वे नेदं साधकं। प्रत्युत वेदस्य सर्वोत्तमत्वमेव द्रढयतीति वेदस्य स्वरूपतोऽर्थतश्च सर्वशास्त्रोत्तमत्वेन तस्यैव परविद्यात्वं प्रधानं। तदर्थनिर्णायकत्वादिनाऽप्राधान्येन ब्रह्मसूत्रादीनां परविद्यात्वव्यपदेशश्चेति सर्वं समंजसं॥

अन्यच्च 'द्वे विद्ये वेदितव्ये इति श्रुतौ ऋगादिपदोपलक्षिताशेषशास्त्राणामपरविद्यात्वोक्त्या अनुग्राहकत्वेनास्यैव परविद्यात्वोक्त्या लिंगत्रयावसितत्वरूपस्य महत्वस्यात्रैव संभवेनास्यैव शास्त्रस्य भारतापेक्षया उत्तमत्वेपि, भारतस्योत्तमत्वोक्तिर्निर्णेतव्यान्तरापेक्षया संकोचयितव्येत्याह ।'– इति वाक्यार्थचन्द्रिकावाक्यं साधकतयोदाहृतं । तदप्यसाधकमेव । तथाहि :–ऋगादिपदोपलक्षिताशेषशास्त्राणामित्यतः प्राक् सुधोक्तं 'निर्णेतव्यार्थानां' इति पदं योज्यं । अनुग्राहकत्वेनेति तृतीयाया 'धान्येन धनवान्–' इत्यादाविवाभेदोऽर्थः । अत्रैवेत्यस्यानुग्राहकाणां मध्येऽत्रैवेत्यर्थः। यथाश्रुते एवकारार्थासंगतेः। लिंगत्रयावसितत्वरूपमहत्वं ब्रह्मसूत्र एव संभवति नान्यत्रेति यथाश्रुतार्थः, सचायुक्तः; भारतेऽपि लिंगत्रयावसितत्वरूप महत्वस्य महदाप्तिमूलत्वादेः सूपपन्नत्वात् । तथाहि :–ब्रह्मसूत्रभारतयोरप्येककर्तृकत्वेन सममाप्तिमूलत्वं । न हि भारतोक्तं युक्तिविरुद्धं; किंतु तत्संवाद्येवेति युक्तिमूलत्वमव्याहतं; श्रुतिसंवादित्वं तु तदर्थविवरणरूपत्वान्निराबाधं, इति यथाश्रुतार्थस्य बाधितत्वात्, अनुग्राहकाणां मध्येऽत्रैवेत्यर्थोऽगीकर्तव्य एव । एवंचोक्तवाक्याद्ब्रह्मतंत्रस्यानुग्राहकत्वरूपमेव गौणं परविद्यात्वं । तत्रापि कृत्स्नवेदानुग्राहकत्वात् लिंगत्रयावसितमहत्ववत्वाच्चानुग्राहकोत्तमं ब्रह्मतंत्रं । अनुग्राह्य (निर्णेतव्य) पौरुषेयशास्त्रेषु महाभारतमुत्तमम्; इत्यर्थस्संपन्न इति ब्रह्मसूत्रस्य वेदादिसर्वशास्त्रोत्तमत्वे कथमिदं साधकमिति विवेचनीयं सूरिभिः ।

एवमेव तदुदाहृतं सर्वमप्यसाधकमेवेति स्फुटमेव शास्त्रमर्यादाभिज्ञानाम् । 'विचार्येषु शास्त्रेषु तत्'इत्यादेः सुधावाक्यस्यायमेवाशयः रामचन्द्रतीर्थीयेप्युक्तः–'निर्णेतव्यार्थेषु शास्त्रेषु भारतस्योत्तमत्वेऽपि निर्णायकेषु ब्रह्मसूत्राणामेवोत्तमत्वमुच्यमानं न विरुद्धमिति भावः' इति । सति चैवमुदाहृतवाक्यार्थचन्द्रिकावाक्यस्य ब्रह्मसूत्रस्यैव सर्वशास्त्रोत्तमत्वपरतां प्रकल्प्य, रामचन्द्रतीर्थीयवाक्यस्य वस्तुस्थितिकथनत्ववर्णनं 'अबद्धं पठित्वा कुचोद्यं करोति' इति न्यायमनुकरोति ।

सर्वेषामपि पूर्वाचार्याणामयमेवार्थस्संप्रतिपन्नः । तथाहि :–
'न चानुव्याख्याने ब्रह्मसूत्रस्य परविद्यात्वोक्तिविरोधः । अनुग्राह्यतया ऋगादीनामनुग्राहकतया ब्रह्मसूत्रस्य च परविद्यात्वोपपत्तेः' इति

—भाष्यदीपिका- 1–2–6

'गीताभाष्यतात्पर्यनिर्णययोर्भारतस्य सर्वोत्तमत्वमुक्तं 'अतो नैतादृशं किं चित्प्रमाणतममिष्यते ।' इत्यनुव्याख्याने ब्रह्मसूत्रस्य सर्व शास्त्रोत्तमत्वमुक्तमतो विरोधः, सत्यं; निर्णयग्रंथेषु भारतस्य सर्वशास्त्रोत्तमत्वमुक्तं, निर्णायकेषु ब्रह्मसूत्रस्य सर्वशास्त्रोत्तमत्वमुक्तमिति न विरोधः । एवमेवोक्तं सुधायां 'विचार्ये ष्वित्यादिना'

लिखित —गीताभाष्यविरोधपरिहारः
–(C. 39 Oriental Research Institute, Mysore)

'ननु गीतातात्पर्य-भाष्ययोरत्र चात्यरिच्यत भारतमिति भारतस्योत्तमत्वं; अनुव्याख्याने 'अतो नैतादृशं किंचित्प्रमाणतममिष्यते'–इत्यनेन सूत्रस्योत्तमत्वमुच्यते ; तत्कथमुत्तमत्वमुभयोरितिचेदित्थं : निर्णायकेषु सूत्रस्य निर्णेयेषु भारतस्येति । इदमुक्तं जयतीर्थार्यैः विचार्येषु शास्त्रेषु तत्' इति'

–महाभारत तात्पर्यनिर्णयजनार्दन भट्टीया (अ. 2)

'अथैतावता निर्णायकेषु ब्रह्मसूत्रमुत्तमं, निर्णेयेषु महाभारत-

मुत्तममित्युक्त्वा निर्णयशास्त्रान्तःपतितो वेदादपि भारतस्योत्तमत्व-मुक्तं स्यादिति न भ्रमितव्यं। अनुव्याख्यान सुधयोः प्रामाण्यप्रकरणस्य केवलपौरुषेयग्रंथप्रामाण्यनिरूपणपरत्वस्य साधितत्वेन (पु. २०) अपौरुषेयवेदोत्तमत्वस्यात्र शंकितुमप्यशक्यत्वात्। ननु तर्हि गीताभाष्यगीतातात्पर्यनिर्णयविरोधो दुर्वारः। तत्र भारतस्य स्पष्टं वेदादुत्तमत्वोक्तेः। तथाहि :–'वेदादपि परं चक्रे पञ्चमं वेदमुत्तमं।' ......... शास्त्रपुंगवः' इति नारायणाष्टाक्षरकल्पे। ........... भारतं चापि कृतवान् पञ्चमं वेदमुत्तमं। ............... वेदादप्युत्तमं च यत्। —इति स्कांदे............'भारतं सर्ववेदाश्च तुलामारोपिताः पुरा।........व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतं। महत्वाद्भारव-त्वाच्च महाभारतमुच्यते॥ निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते। इत्यादि –गीताभाष्यं

'शास्त्रेषु भारतं सारं तत्र नामसहस्रकं। वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा॥ न भारतसमं शास्त्रं कुत एवानयोस्समं। भारतं सर्ववेदाश्च ............ भारतं॥ महत्वात् ........ प्रमुच्यते॥ स्वयं नारायणो........। चकारे पंचमं वेदं महाभारतसंज्ञितं। इति ब्रह्मांडे॥'

—गीता तात्पर्यनिर्णयः

उदाहृतभाष्यतात्पर्ययोर्वेदादपि परं चक्रे, न भारतसमं शास्त्रं वेदादप्युत्तमं च यत्।' इत्यादिवाक्यैरापाततो वेदादि सर्वशास्त्रोत्तमं भारतमिति प्रतीयते। न ह्यापातप्रतीत एव वाक्यार्थो भवितु मर्हति; मीमांसावैयर्थ्यापत्तेः। अतोऽत्र विचारः कर्तव्यः, प्रकरणं च पर्यालोचनीयं।

अत्र न्यायदीपिकायां प्रमेयदीपिकायां च श्रीमज्जयतीर्थपूज्यचरणानां तात्पर्यभाष्यव्याख्यानमवश्यमनुसंधाय तदनुरोधेन मूल-

तात्पर्य निर्णयं तथाहि : - भारतस्य सर्वशास्त्रोत्तमत्वं, भारतेऽपि गीताया उत्तमत्वमेव कुत इत्यतस्तत्पुराणवचनेन साधयति । शास्त्रे-ष्विति ।.......... भारतस्य सर्वशास्त्रोत्तमत्वमेव कुत इत्यत आह। भारतमिति। वेदपदेन वेदयंतीति सर्वशास्त्राण्युच्यंते। .... भारत-स्यैवं सर्वशास्त्रोत्तमत्वे किं निमित्तमित्यतः परमाप्तकृतत्वं दर्शयति स्वयमिति। ......एवंभूतापरचितत्वस्य भागवतादिष्वपि साम्यात्को विशेषो भारतस्येत्युक्तं। केवलमिति। नासुरमोहनाद्यर्थमप्यत्रान्यदु-च्यते। अन्यथाप्रतीतस्य गुह्यदर्शनभाषाभ्यामुक्तत्वात्। अन्यत्र क्वचिन्व्यामोहनार्थमन्यथाकथनादिति भावः। एवं परमाप्तिमू-लत्वेनैव भारतस्य सर्वशास्त्रोत्तमत्वं, किमु वेदसंवादितया पंचम-वेदत्वेनापीति भावेनाह, पंचममिति॥ —न्यायदीपिका

नन्वितिहासपुराणः पंचमो वेदानां वेद इति श्रुत्या..........वेद शब्देन रूढ्या पंचरात्रादेर्गृहीतुं शक्यत्वेऽपि ब्रह्मतर्कमहाव्याकरणा-देर्गृहीतुमशक्यत्वात्कथमनेन तत्संग्रह इत्यतो योगमंगीकृत्य व्याचष्टे, वेदपदेनेति। —न्यायदीपिका टिप्पणी

अनेन वेदाधिकारिणां त्रैवर्णिकानां पुंसां वेदार्थज्ञानोपायो भारतमिति, सूचयति, वेदानधिकारिणां वेदतुल्यत्वाच्च तन्निर्माणं युक्तमित्याशयेनाह। वेदेति। तदनेन परमाप्तिमूलत्वान्महाभारतस्य प्रामाण्यं। ............ वेदादिसंवादेनापि भारतस्य प्रामाण्यनिश्चय इत्याशयेनाह। सर्वेति॥ —प्रमेयदीपिका.

वेदतुल्यत्वाच्चेति। वेदस्थानीयत्वादित्यर्थः, न तु वेदसमत्वा-दित्यर्थः, समस्तशास्त्रार्थनिदर्शनात्मकं चक्रे महाभारतनामधेयं। वेदोत्तमं तच्च विधातृशंकरप्रधानकैस्तन्मुखतः सुरैः श्रुतं॥ इति महाभारततात्पर्यनिर्णयविरोधादिति संप्रदायविदः।

—श्रीनिवासतीर्थीय

तथाच 'वेदादपि परं चक्रे'—इत्यादि भाष्यं, 'शास्त्रेषु भारतं सारं–इत्यादि तात्पर्यं च भारतस्य प्रामाण्योत्तमत्वयोः प्रतिपादनाय प्रवृत्तमित्यविवादं। प्रामाण्यं चोभयत्रापि परमाप्तिमूलत्वश्रुतिसंवादित्वादिना निरूप्य, भारतस्य सर्वशास्त्रोत्तमत्वं वर्णितं। प्रकरणानुरोधेनात्र सर्वशास्त्रोत्तमत्वं पौरुषेयसर्वशास्त्रोत्तमत्व एव पर्यवस्यति। तथाहि :-आप्तिमूलत्व–श्रुतिसंवादित्वादिना प्रामाण्योक्तिपरेऽस्मिन् प्रकरणे तथाविधप्रामाण्यवत्वेन संभावितान्येव शास्त्राण्युपादेयानि नापौरुषेयवेदोऽत्र प्रवेशमर्हति, पौरुषेयशास्त्राणां तारतम्यमेव प्राकरणिकमिति भारतस्यापौरुषेयवेदादुत्तमत्वमुदाहृतभाष्यतात्पर्याभ्यां न सिध्यति। तर्हि वेदादपि परमित्यादिस्पष्टोक्तेः का गतिरिति चेत्, श्रुणु; स्त्रीशूद्रब्रह्मबंध्वादिसर्वाधिकारिकं भारतं,वेदस्तु त्रैवर्णिकपुरुषमात्राधिकारिक इत्यधिकारिबाहुल्याभिप्रायेण, तदनुक्तकेवलेश्वरज्ञानदृष्टार्थयुक्तत्वाशयेन च परत्वोक्तिस्संगच्छत एवेति। भारतस्य वेदानुक्तार्थकत्वे तत एव महत्वसंभवेन सिद्धं नस्समीहितमिति न संतोष्टव्यं। वेदानुक्तार्थयुक्तत्वमपि न यथाश्रुतं वर्णितुं शक्यं 'अनंता वै वेदाः' इत्यादिना वेदानामानंत्यं प्रमितं; भारतं तु परिमितं। तथाविधे तस्मिन् अपरिमितवेदराश्यनुक्तस्योक्तिः कथं संभाव्येत? तथात्वे वा वेदानामानंत्यं कथं युज्येत? इति यथाश्रुतार्थस्य बाधितत्वात् तदनुक्त केवलेश्वरज्ञानदृष्टार्थयुक्तामित्यस्य चतुर्मुखोपदिष्टचतुर्वेदानुक्तकेवलेश्वरबुद्धिस्थमूलवेदोक्तार्थयुक्तामित्यर्थो वर्णनीयः। अथवा वेदेऽव्यक्तं कंठतोऽनुक्तमर्थात्सूचितमप्यर्थं दृष्टान्तकथनादिना स्पष्टं विवृणोति भारत इति तदनुक्तार्थयुक्तत्वं भारतस्य बोध्यं। अतो नेदमपौरुषेय वेदाद्भारतस्य स्वरूपतोऽर्थतो वोत्तमत्वापादकमित्यकिंचित्करमेव।

किंच भाष्योदाहृतप्रमाणेष्वेव क्वचिद्वेदादप्युत्तममिति,

क्वचित्पञ्चमं वेदमुत्तममित्यादिविरुद्धोक्तिरस्तीति यथाश्रुतार्थो विवक्षितुमशक्य एव। अगत्या यथाऽविरोधस्तथाऽर्थो वाच्य इत्यस्मदुक्तरीतिराश्रयणीयैव।

अत्रैव प्रकरणे प्रमेयदीपिकायां 'वेदतुल्यत्वाच्च'-इत्युक्तं। तस्य च श्रीनिवासतीर्थीये वेदस्थानीयत्वादित्यर्थमुक्त्वा, वेदसमत्वादिति-यथाश्रुतार्थे वेदोत्तममिति तात्पर्यनिर्णयविरोध उद्भावितः। अनेन वेदोत्तममित्यस्य वेदादुत्तममिति नार्थः; वेदस्थानीयं वेदत्वेन गृहीतं इत्याद्यर्थ एव सांप्रदायिक इति सिध्यतीति वेदमहत्वस्य न क्वापि हानिः॥

किंच न्यायदीपिकायां सर्ववेदाश्चेत्यत्र वेदयंतीति वेदा इति वेदस्य यौगिकार्थोक्त्या रूढ्यर्थो वेदो नात्र गृहीतुमुचित इति सूचनात् तुलारोपणमपि भारततदितरपौरुषेयशास्त्रयोरेवेति पौरुषेय शास्त्रोत्तमत्वमेव परीक्षया सिद्धमिति ज्ञायते। अस्मिन्नेव प्रकरणे स्यादेतदनुमानमिति प्रमेयदीपिकावाक्याभिमतानुमाने सजातीयोत्तमत्वमेव साध्यतया निर्दिष्टं टिप्पणीषु। साजात्यं च पौरुषेयत्वेनैव। एवं च भारतं निर्णयसर्वपौरुषेयशास्त्रोत्तमं; नापौरुषेयत्वेन विजातीयवेदोत्तममिति सिध्यति। उक्तं च 'भारतं सजातीयोत्तमं' इत्यादि

—प्रमेयदीपिका उम्मजींया

भारतशब्दः स्वसजातीयोत्तमाभिधायकः ......—भारतं स्वसजातीयसर्वशास्त्रोत्तमं....  —प्रमेयदीपिकाभावरत्नकोशः

एवं चोक्तांतरंगबहिरंगसाधकैः टीकाटिप्पण्यादिसंवादेन च भाष्यतात्पर्यवचनानां भारतस्य पौरुषेयशास्त्रोत्तमत्वमेव, नवेदादप्युत्तमत्वमित्येवार्थो युक्त इति पौरुषेयस्य वेदोत्तमत्वे न किंचित्प्रमाणमिति भारतादेः वेदोत्तमत्ववचनमनुपासितसांप्रदायिकगुरुचरणतया ग्रन्थमर्मानभिज्ञाननिबंधनमेवेति द्रष्टव्यं।

अपि च पौरुषेयस्य वेदादप्याधिक्यं न युक्तमिति कंठत एव सयुक्तिकमुक्तं श्रीमद्व्यासतीर्थपूज्यचरणैः :- 'वेदविरुद्धतया निर्दिष्ट सांख्याद्यैक्यमभिप्रेत्य सांख्यादिशब्देन पंचरात्रविवक्षायां तु पंचरात्रादेर्वेदादप्याधिक्यमुक्तं स्यात् ; न च तद्युक्तं ; वेदविरोधेनालब्धप्रामाण्यस्य तस्य वेदादाधिक्यस्य दूरनिरस्तत्वादिति'

—तात्पर्यचन्द्रिका (अ. 1—1—3)

न केवलं साधकप्रमाणाभावः; प्रत्युत वेदस्यावरत्वे स्फुटतमं निरवकाशं बाधकं चास्ति । महाभारते अंते, आश्चर्यपर्वणि सदृष्टांतं शपथपूर्वकं उच्छ्रितबाहुयुगं वेदस्य असंकुचित सर्वशास्त्रोत्तमत्वस्यैव उद्घोषितत्वात् । उदाहृतं च तदेव महाभारततात्पर्यनिर्णये—

'सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परं ॥' इति

एवं शपथपूर्वमुद्घोषयितुः भगवत्पादस्य वेदावरत्वाशयकल्पनं तस्यव्याहतभाषित्वमापादयतीति निंदायामेव पर्यवसानेन द्रोह एवापतेत् । अतोऽपसिद्धांतप्रचारदूरीकरणं श्रेय इति स्मर्तव्यं ।

तथाच शास्त्रं (विद्या) द्विविधमपौरुषेयं पौरुषेयं चेति अपौरुषेयो वेद एक एव । पौरुषेयमपि द्विविधं ; निर्णेयं निर्णायकं चेति ? तत्र (पौरुषेय) निर्णेयेषु महाभारतमुत्तमं ; निर्णायकेषु ब्रह्ममीमांसाशास्त्रमुत्तमं । तत्राऽपौरुषेयवेद एव साक्षाद्विष्णुबोधकत्वान्मुख्य परविद्या, वेदस्य विष्णुबोधकत्वौपयिकत्वेन ब्रह्मसूत्रादिकमपि परंपरया विष्णुविषयकत्वादमुख्यपरविद्येत्येव सिद्धान्तः। तदभिप्रायेणैवब्रह्मसूत्रादीनामपि परविद्यात्वव्यवहारस्तत्रतत्र कृतस्साधु संगच्छत इति दिक् ॥

इति श्रीमद्विद्वच्चक्रचूडामणि गोविंदकृष्णाचार्यात्मज वासुदेवाचार्य विरचितः परविद्यानिर्धारणापरनामा विद्याविनिर्णयः समाप्तः

श्रीकृष्णार्पणमस्तु

*Copies can be had From :—*

**D. Vasudevachar,**

"SRI RAGHAVENDRA PRASAD"

1498/1, Krishnamurthipuram, Mysore.